मन्त्रगतचतुष्टसङ्ख्यां चतुर्दिगात्मना च स्तौति— "यद्देव चतुर्भिश्चतस्रो वै दिश इति । अत्र मन्त्रगत-गायत्र-त्रैष्टुभ-जागता-नुष्टुभैः छन्दोभिः सह पूर्वां चतुःसङ्ख्यां मध्यदिगवान्तर-दिगात्मना स्तौति— "छन्दोभिश्च यजुर्भिश्चादसे तदष्टा-विति * ॥ ४४ ॥ २ [ ३. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम् . )

हस्त ऽएष्याभिर्भवन्त्यथ पशूनभिमन्त्रयते । एतद्वा ऽएषु देवा ऽअन्वेषिष्यन्तः पुरस्ताद्वीर्यं ऽअदधुस्तथै-वैष्वय मेतदन्वेषिष्यन् पुरस्ताद्वीर्यं दधाति ॥ १ ॥

सोऽश्व मभिमन्त्रयते । प्रतूर्त्तं वाजिन्नाद्र-वेति यद्वै क्षिप्रं तत्तूर्त्तमथ यत् क्षिप्रात् क्षेपीय-

---

* गायत्रम्, त्रैष्टुभम्, जागतम्, आनुष्टुभम्, इति चत्वारि छन्दांसि, देवस्य त्वा पृथिव्याः, अभ्रिरसि, हस्त आधाय ( वा॰ सं॰ ११. ६ क, ६ ख, १०, ११.) इति चत्वारि यजूंषीत्येषां सङ्कलनया अष्टाविति सिद्धम् ।

स्तात् प्रत्नूर्त्तं व्वरिष्ठा मनु संव्वत मितीयं वै व्वरिष्ठा संव्वदिमा मनु संव्वत मित्येतद्दिवि ते जन्म परम मन्तरिक्षे तव नाभिः पृथिव्या मधि योनिरिदिति तदेन मेता देवताः करोत्यग्निं व्वायु मादित्यं तद्वज्रे व्वीर्यं दधाति * ॥ २ ॥

अथ रासभम् । युञ्जाथाए रासभं युव मित्यध्वर्युं चैतद्यजमानं चाहास्मिन्यामे व्वृषण्वसू इत्यस्मिन् कर्मणि व्वृषण्वसू इत्येतदग्निं भरन्त मस्मयु मित्यग्निं भरन्त मस्मत्प्रेषित मित्येतद्रासभे व्वीर्यं दधाति † ॥ ३ ॥

अथाजम् ‡ । योगे-योगे तवस्तरं व्वाजे-व्वाजे हवामह इत्यन्नं वै व्वाजः कर्मणि-कर्मणि तवस्तर मन्नेऽन्ने हवामह इत्येतत् सखाय इन्द्र मूतय इतीन्द्रियवन्त मूतय इत्येतदजे व्वीर्यं दधाति § ॥ ४ ॥

त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्यावानग्नि-

*, †, § 'दधाति'—इति क, ख।

‡ 'अथाजम्'—इति ग, घ।

यावत्यस्य मात्रा तावतैवैतद्वीर्यं दधाति * ॥ ५ ॥

अथैनान् प्राच उत्क्रमयति । तदेनं मैत्रैः पशुभिरन्विच्छति नोपस्पृशत्यग्निरेष यत् पशवो नेन्नाय मग्निर्हिनसदिति ॥ ६ ॥

सोऽश्व मुत्क्रमयति । प्रतूर्वन्नेह्यवक्रामन्नशस्तीरिति पाप्मा वा ऽअशस्तिस्त्वरमाण एह्यवक्रामन् पाप्मान मित्येतद्रुद्रस्य गाणपत्यं मयोभूरेहीति रौद्रा वै पशवो या ते देवता तस्यै गाणपत्यं मयोभूरेहीत्येतत्तदेन मश्वेनान्विच्छति † ॥ ७ ॥

अथ रासभम् । उर्वन्तरिक्षं वीहि स्वस्तिगव्यूतिरभयानि कृण्वन्निति यथैव यजुस्तथा बन्धुः पूष्णा सयुजा सहेतीयं वै पूषानया सयुजा सहेत्येतत्तदेनꣳ रासभेनान्विच्छति ‡ ॥ ८ ॥

अथाजम् । पृथिव्याः सधस्थादग्निं पुरीष्य मङ्गिरस्वदाभरेति पृथिव्या उपस्थादग्निं पशव्य मग्निवदाभरेत्येतत्तदेन मजेनान्विच्छति § ॥ ९ ॥

---

* 'दधाति'—इति क., ख. ।

†, ‡, § '०न्विच्छति'—इति क, ख ।

त्रिभिरन्विच्छति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्विच्छति त्रिभिः पुरस्तादभिमन्त्रयते तत् षट् षड्ऋतवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ १० ॥ ४ ॥

॥ इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् [३. २.] ॥

पूर्वं साववनीयस्य दक्षिणप्रदेशे विहृतमुत्तरमागायताः प्राङ्मुखा येऽश्वगर्दभाजास्तिष्ठन्ति, तेषा मिदानीं यथाक्रम मभिमन्त्रणं समन्त्रकं विधित्सुरादावभिमन्त्रणं वीर्यात्मना प्रशंसति— "हस्त एवाभिभवतीति । पाणिं हस्ते गृहीत्वैव पशूनभिमन्त्रयते * ॥११॥

प्रथम मश्वाभिमन्त्रणं समन्त्रकं विधत्ते— "प्रतूर्त्त मिति"† । मन्त्रस्याय मर्थः,— हे 'वाजिन्' अश्व ! 'वरिष्ठाम्' अतिशयेनोर्वीम्, 'अनुसंवतं' सम्भूताम् भवतेः क्विपि "अनुदात्तोपदेश-वनति०"—इति ‡ न-लोपे, "ह्रस्वस्य पिति०"—इति § तुक् । पद्भ्याभिः क्रियमाणं मआजनम् 'अनु'-लक्ष्य भूमिं, 'प्रतूर्त्तं' त्वरितः

---

* "ईषाय त्रिब्यधि मादाय, हस्त आदायेश्वेना अभिमन्त्रयते"— इति का० श्रौ० सू० १६. २. ८। तथान्यत्— आ० श्रौ० ११. ८. ११ ।

† का० श्रौ० सू० १६. ३. ६ ।

‡ पा० सू० ६. ४. ३७ ।

§ पा० सू० ६. १. ७१ ।

"ज्वरत्वर०"—इत्यूठि * कृते "नसत्त-निषत्तानुत्त-प्रतूर्त्त-सूर्त्त-गूर्त्तानि छन्दसि"—इति † निष्ठा-तस्य नत्वाभावेन निपातनम्। क्षिप्रम् 'आद्रव' आगच्छ। हे अश्व! 'ते' तव 'परमं जन्म दिवि' आदित्यरूपेण, 'अन्तरिक्षे' तव 'नाभिः' वायुरूपेण, 'पृथिव्यां' तव 'योनिः' उत्पत्तिस्थानम् अग्न्यात्मकत्वेनेति, अश्वस्य लोकत्रयाभिमानिदेवतात्वेन स्तुतिः क्रियत इति तात्पर्यम् ‡।

अथ प्रतूर्त्तपदं व्याचष्टे— "यद्वै क्षिप्रं तत् प्रतूर्त्त मिति। 'क्षिप्रं'—तूर्णम्, 'अथ' 'यत् क्षिप्रात्' अपि 'क्षेपीयः' क्षिप्रतरम्, 'तत् प्रतूर्त्तम्' इत्युच्यते। क्षिप्रशब्दादीयसुनि "स्थूलदूरयुवह्रस्वक्षिप्र०"—इति § यणादिपरस्य लोपः, पूर्वस्येकारस्य गुणः। उत्तरार्द्धस्य तात्पर्य्य माह— "सर्व्वेन मेता देवता इति। अभिमन्त्रणेनानेन किं मायातम्? तदाह— "तदस्मै वीर्य्यं दधातीति ॥ २ ॥

रासभाभिमन्त्रणं समन्त्रं विधत्ते— "अथ रासभ मिति ‖। अभिमन्त्रयत इत्यनुषङ्गः। 'युवम्' इति द्विवचनेन अध्वर्युयजमानावुच्येते। 'वृषण्वसू' वृषा सेक्ता गर्दभः, स ययोर्वसु धनम्, तौ। 'युवं' युवाम्। 'अस्मिन्' 'यामे' यायते गम्यते प्राप्यते देवैरिति, यस्मिन् सङ्गच्छन्ते यत्र परस्परं देवा इति वा, यामं कर्म, तस्मिन् रासभं 'युञ्जाथाम्'। तं विशिनष्टि— "अग्निं

* पा० सू० ६. ४. २०।
† पा० सू० ८. २. ६१।
‡ मन्त्रस्त्वयम्—वा० सं० ११. १२।
§ पा० सू० ६. ४. १५६।
‖ का० श्रौ० सू० १६. २. ८।

तदिदं विधत्ते— "अथैनान् प्राच इति । 'एनान्' पशून् प्राङ्मुखाननुक्रमयेत् । उदङ्मितैः पशुभिः 'एनम्' अद्रूप मग्निम् अन्विष्टवान् भवति । "नोपस्पृशतीति । 'यत्' यतः 'पशवो-ऽग्निः' स्पर्शनेन हिंसा स्यात्, सा माभूदिति । 'हिनसत्'— इति हिंसेः पञ्चमलकारे रूपम् ॥ ६ ॥

उत्क्रमणमनूद्य मन्त्रं विधत्ते— "सोऽश्व उत्क्रामयतीति । "प्रतूर्वन्नेहीति * । अस्यायमर्थः,— 'अशस्तीः' पाप्मनः 'अवक्रामन्' अभिगमयन् 'प्रतूर्वन्' प्रकर्षेण त्वरमाणः 'एहि' आगच्छ । 'मयोभूः' सुखस्य भावयिता 'रुद्रस्य' पशुपतेः 'गाण-पत्यं' गणपतित्वम् 'एहि' गच्छ । अशस्तिपदं व्याचष्टे— "पाप्मा वा अशस्तिरिति । अथास्य रुद्रगणपतित्वं प्रतिपाद-यति— "रौद्रा वै पशव इति । पशुरूपस्याश्वस्य देवता रुद्रः, तस्य गणपतित्वं मेहीत्यर्थः । अश्वोत्क्रमणेन नः किं जात मिति, तद् दर्शयति— "तदेन मश्वेनान्विच्छतीति ॥ ७ ॥

रासभोत्क्रमणं विधत्ते— "अथ रासभ मुर्वन्तरिक्ष मिति † । 'उरु' विस्तीर्णम् अन्तरिक्षं 'वीहि' प्राप्नुहि । किं कुर्वन् ? 'गव्यूतिः' गोसञ्चारभूमिं 'स्वस्ति' क्षेमेण कुर्वन्, 'अभयानि' जनयन्, 'पूष्णा' पृथिव्या यागभूम्या 'सयुजा' सहायेन सह वीहीति ‡ । मन्त्रस्य पूर्वार्द्धं निगदव्याख्यात मित्याह— "यथैव यजुस्तथा बन्धुरिति । न व्याख्यातुमर्हतीत्यर्थः । उत्तरार्द्ध-पूषपदं विवृणोति— "इयं वै पूषेति ॥ ८ ॥

---

* वा० सं० ११. १५ क ।
† का० श्रौ० सू० १६. २. १० ।
‡ वा० सं० ११. १५ ख ।

अश्वोऽक्रमत विधत्ते— "अथाजम् पृथिव्या इति * । व्याख्यातोऽयं मन्त्रः † ॥ ८ ॥

उत्क्रमणानन्तरमग्नित्वसङ्ख्या मन्त्रयमाना स्तौति— "त्रिभि-रग्निस्कृति त्रिवृदग्निरिति । पूर्वं येतेषा मश्वरासभाजाना मभि-मन्त्रणे त्रयो मन्त्रा विनियुक्ताः, इदानीं मुत्क्रमणे त्रय इति तां सङ्ख्यां सम्भूय ऋतुसंवत्सराग्निरूपत्वेन प्रशंसितुं सुक्त मनु-वादयति— "त्रिभिः पुरस्तादभिमन्त्रयते तत् षडिति । स्पष्टो-ऽर्थः ॥ १० ॥ ४ [ २ २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे तृतीयेऽध्याये द्वितीयं ब्राह्मणम् ॥

इति षष्ठकाण्डे द्वितीयः प्रपाठकः समाप्तः ‡ ॥

---

* का० श्रौ० सू० १६ २ १० ।

† ११६ पृ० २६ पं० (वा० सं० ११ ८ क) द्रष्टव्यम् ।

‡ "कलोकसंख्या १०८"—इति क, ख "कण्डिकासंख्या १०८"—इति ग, घ । तत्र १ ब्रा० ३० क०, २ ब्रा० १० क०, ३ ब्रा० ३३ क०, ४ ब्रा० १० क० अनुवाकसंख्या १०८ इति विवृतम् ॥

अथ

तृतीयप्रपाठके प्रथमं ब्राह्मणम् ,
अपि वा
तृतीयाध्याये तृतीयं ब्राह्मणम् ।

---

॥ हरिः ॐ ॥

प्रदीप्ता एतेऽग्नयो भवन्ति * । अथ मृद मच्छयन्तीमे वै लोका एतेऽग्नयस्ते यदा प्रदीप्ता अथैत ऽइमे लोकाः पुरो वा ऽएतदेभ्यो लोकेभ्यो ऽग्रे देवाः कर्मान्वैच्छंस्तद्यदेतानग्नीनतीत्य मृद माहरन्ति तदेनं पुरैभ्यो लोकेभ्योऽन्विच्छति ॥ १ ॥

प्राञ्चो यन्ति । प्राची हि दिगग्नेः स्वाया मैवैन मेतद्दिश्यन्विच्छति स्वायां दिशि विन्दति ॥२॥

ते प्रयन्ति । अग्निं पुरीष्य मङ्गिरस्वदच्छेम इत्यग्निं पशव्य मग्निवदच्छेम इत्येतत् † ॥ ३ ॥

* भवन्ति'—इति ग, घ ।

† 'इत्येतत्—इति ग, घ ।

अथानड्वाहपुरुष मीक्षते । अग्निं पुरीष्य मङ्गिरस्वद्भरिष्याम इत्यग्निं पशव्य मग्निवद्भरिष्याम इत्येवैतत्तदेन मनड्वाहपुरुषेणान्विच्छति * ॥ ४ ॥

अथ वल्मीकवपा सुषिरा व्यध्वे निहिता भवति । ता मन्वीक्षत इयं वै वल्मीकवपेय मु वा इमे लोका एतद्वा एनं देवा एषु लोकेषु व्यध्व मैच्छंस्तथैवैन मय मेतदेषु लोकेषु व्यध्व मिच्छति † ॥ ५ ॥

अन्वग्निरुषसा मग्र मख्यदिति । तदेन मुषःस्वैच्छन्नन्वहानि प्रथमो जातवेदा इति तदेन महःस्वैच्छन्ननु सूर्यस्य पुरुत्रा च रश्मीनिति तदेनꣳ सूर्यस्य रश्मिष्वैच्छन्ननु द्यावापृथिवी ऽऽततन्थेति तदेनं द्यावापृथिव्योरैच्छंस्त मविन्दंस्तथैवैन मय मेतद्विन्दति तं यदा परा पश्यत्यथ ता मवाच्यत्यागच्छन्ति मृदम् ॥ ६ ॥

अथाश्व मभिमन्त्रयते । एतद्वै देवा अब्रुवन्

* 'न्विच्छति'—इति क, ख ।
† 'मिच्छति'—इति क, ख ।

पाप्मान मेवापघ्नतेति श्रमो वै पाप्मा श्रम मेव पाप्मान मपघ्नतेति तद्य श्रमं पाप्मान मपाघ्नं-स्तथैवाप्लाय गैतच्छ्रमं पाप्मान मपघ्नन्ति ॥ ७ ॥

आगत्य व्वाज्यध्वान मिति* । आगतो ह्यप्याध्वा भवति सर्व्वा मृधो व्विधूनुत ऽइति पाप्मा वै मृधः सर्व्वान् पाप्मनो व्विधूनुत ऽइत्येतत्तस्मादु हैतदुप्तः स्वत्वा † व्विधूनुते ऽग्निᳪ सधस्थे महति चक्षुषा निचिकीष ऽइतीदं वै महत् सधस्थ मग्नि मस्मिन् महति सधस्थे चक्षुषा दिदृक्षत ऽइत्येतत् ‡ ॥ ८ ॥

अथैन माक्रमयति । एतद्वा ऽएष एतं देवेभ्यो ऽनुविद्य प्राब्रवीद्यथाय मिहैवेत्येवम् § ॥ ९ ॥

यद्वेवाक्रमयति । एतद्वै देवा अविभयुर्यद्वै न इम मिह रक्षाᳪसि नाष्ट्रा न हन्युरिति तस्मा ऽएतं व्वज्र मुपरिष्टादभिगोप्तार मकुर्व्वन्नमु मेवा-

---

* 'मिति'—इति क। 'मिसि'—इति ग, घ।
† 'स्नात्वा'—इति ग, घ, डा०-वेवरेण च दृष्टम्।
‡ 'इत्येतत्'—इति ग, घ।
§ 'मिहैवेत्येवम्'—इति ग, घ।

दित्य मसौ वा ऽआदित्य एषोऽश्वस्तथैवास्मा ऽअथ मेतं व्वज्र मुपरिष्टादभिगोप्तारं करोति ॥ १० ॥

आक्रम्य व्वाजिन् । पृथिवी मग्नि मिच्छ रुचा त्व मिति चक्षुर्वै रुगाक्रम्य त्वं व्वाजिन् पृथिवी मग्नि मिच्छ चक्षुषेत्येतद् भूम्या व्वृत्त्वाय* नो ब्रूहि यतः खनेम तं व्वय मिति भूमेस्तत् स्पाशयित्वाय नो ब्रूहि यत एनं खनेमेत्येतत् † ॥ ११ ॥

अथैन मुन्मृशति । एतद्वा ऽएनं देवाः प्रोषिवाꣳसं व्वीर्येण समार्द्धयंस्तथैवैन मय मेतत् प्रोषिवाꣳसं व्वीर्येण समर्द्धयति । द्यौस्ते पृष्ठं पृथिवी सधस्थ मात्मान्तरिक्षꣳ समुद्रो योनिरितीत्य मसीत्य मसीत्येवैतदाह विख्याय चक्षुषा त्व मभितिष्ठ पृतन्यत इति विख्याय चक्षुषा त्व मभितिष्ठ सर्व्वान् पाप्मन इत्येतन्नोपस्पृशति व्वज्रो वा ऽअश्वो नेन्मायं व्वज्रो हिनसदिति ‡ ॥ १२ ॥

अथैन मुत्क्रमयति । एतद्वै देवा अब्रुवन्

* 'वृत्वाय'—इति च इष्टं डा०—वेवरमहोदयेन ।

† '०मेमेति'—इति ग, घ ।

‡ 'हिनसद्दिति'—इति क, ख, ङ, 'हिनसदिति'—इति ग, घ ।

क्रि मिम मभ्युत्क्रमिष्याम इति महत् सौभग मिति तं महत् सौभग मभ्युदक्रमयंस्तथैवैन मय मेतन् महत् सौभग मभ्युत्क्रमयत्युत्क्राम महते सौभगायेत्युत्क्राम महत्ते सौभग मित्येतत्तस्माद्वैतच्छ्रः पशूनां भगितमो ऽस्मादास्थानादिति यथैतत्तिष्ठसीत्येतद्द्रविणोदा इति द्रविणं ह्येभ्यो ददाति वाजिन्निति वाजी ह्येष व्वयं त्वाम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे ऽअस्या इति व्वयं मस्यै पृथिव्यै सुमतौ त्वामाग्नि मस्या उपस्थे खनन्त इत्येतत् * ॥ १३ ॥

पथैन मुत्क्रान्त मभिमन्त्रयते । एतद्वा ऽएनं देवाः प्रोचिवांसं यथा ददिवांसं व्वन्देतैव मुपास्तुवन्नुपा मह्यंस्तथैवैन मय मेतदुपस्तौत्युप महयत्युदक्रमीदित्युद्ध्यक्रमीद् द्रविणोदा इति द्रविणं ह्येभ्यो ददाति वाज्यर्वेति वाजी च ह्येषो ऽर्वा चाकः सुलोकं सुकृतं पृथिव्या मित्यकरः सुलोकं सुकृतं पृथिव्या मित्येतत्ततः खनेम सुप्र-

---

* 'इत्येतत्'—इति ग, घ।

तीक मग्नि मिति तत यदेनं स्वनेमीत्येतत् सुप्रतीक मिति सर्व्वतो वा ऽअग्निः सुप्रतीकः स्वो रुहाणा अधि नाक मुत्तम मिति स्वर्गो वै लोको नाकः स्वर्गं लोकए रोहन्तोऽधि नाक मुत्तम मित्येतत्तं दक्षिणोपसङ्क्रमयति * यथेतरौ पशू भवतस्ते दक्षिणतः प्राञ्चस्तिष्ठन्ति स य एवामुत्र दक्षिणत † स्यानस्य बन्धुः सोऽत्र ‡ ॥ १४ ॥

अथोपविश्य स्रुव मभिजुहोति । एतद्वै देवा अब्रुवंश्चेतयध्व मिति चिति मिच्छतेति व्वाव तदब्रुवंस्ते चेतयमाना एत माहुति मपश्यंस्ता मजुहवुस्ताए हुत्वेमांल्लोकानुखा मपश्यन् ॥ १५ ॥

ते ऽब्रुवन् । चेतयध्व मेवेति चिति मिच्छतेति व्वाव तदब्रुवंस्ते चेतयमाना एतां द्वितीया माहुति मपश्यंस्ता मजुहवुस्ताए हुत्वा विश्वज्योतिषोऽपश्यन्नेता देवता अग्निं व्वायु मादित्य-

---

* 'दक्षिणतोपसंक्रमयति'—इति घ ।

† 'दक्षिणत'—इति क, ख ।

‡ 'सोऽत्रा'—इति क, 'सोऽत्रा'—इति ख, 'सोऽत्रा'—इति ङ ।

§ 'मपश्यन्'—इति ग, घ ।

मात्रा तावतैवैन मेतद् रेतोभूतꣳ सिञ्चतीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्यो ऽग्निर्यावानग्नि-र्यावत्यस्य मात्रा तावतैवैन मेतद् रेतोभूतꣳ सिञ्चति * ॥ २१ ॥

अश्वस्य पदे जुहोति । अग्निरेव यदश्वस्तस्यो हास्यैते ऽग्निमत्येवाहुती हुते भवतः ॥ २२ ॥

अथैनं परिलिखति । मात्रा मेवास्मा ऽएतत् करोति यथैतावानसीत्येवम् † ॥ २३ ॥

यद्वेवैनं परिलिखति । एतद्वै देवा अबिभयु-र्यद्वै न इम मिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्मा ऽएतां पुरं पर्यश्रयंस्तथैवास्मा ऽअय मेतां पुरं परि-श्रयत्यश्मा वज्रो वा ऽअभ्रिर्व्वज्र मेवास्मा ऽएतदभि-गोप्तारं करोति सर्व्वतः परिलिखति सर्व्वत एवास्मा ऽएतं वज्र मभिगोप्तारं करोति त्रिष्कृत्वः परिलिखति त्रिवृत मेवास्मा ऽएतं वज्र मभिगोप्तारं करोति ॥ २४ ॥

---

* 'सिञ्चति'—इति ख ।
† 'भवतः'—इति क, ख ।
‡ ॰सीत्येवम्'—इति ग, घ ।

परि व्राजपतिः कविः *। परि त्वाग्ने पुरं वयं त्व मग्ने द्युभिरित्यग्नि मेवास्मा ऽएतद्गुपस्तुत्य वर्म करोति परिवतीभिः परीव हि पुर आग्नेयीभिरग्निपुरा मेवास्मा ऽएतत् करोति सा हैषाग्निपुरा दीप्यमाना तिष्ठति तिसृभिस्त्रिपुर मेवास्मा ऽएतत् करोति तस्माद्ध हैतत् पुरां परमꣳ रूपं यत्त्रिपुरꣳ स वै वर्षीयसा-वर्षीयसा छन्दसा परां-परां लेखां वरीयसीं करोति तस्मात् पुरां परा-परा वरीयसी लेखा भवन्ति लेखा हि पुरः † ॥ २५ ॥

अथैन मस्यां खनति। एतद्वै देवा अबिभयुर्यद्वै न इम मिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्मा ऽइमा मेवात्मान मकुर्व्वन् गुप्त्या ऽआत्मात्मानं गोप्स्यतीति सा समन्विला स्वास्वस्येयमात्मा भवति यद्वेव समन्विला योनिर्व्वा ऽइयꣳ रेत इदं यद्वै रेतसो योनि मतिरिच्यते ऽमुया तद्

* 'कवि'—इति ग, घ।

† 'पुरः'—इति ख, 'पुरः'—इति ग, घ, 'पुरः'—इति च।

मेता ह्येव देवता विश्वं ज्योतिस्तथैवैतद्यजमान ऽएते आहुती हुत्वेमांश्च लोकानुख्यां पश्यत्ये-ताश्च देवता विश्वज्योतिषो व्यतिषक्ताभ्यां जुहोती-मांश्च तल्लोकानेताश्च देवता व्यतिषजति ॥ १६ ॥

यद्देवैते ऽआहुती जुहोति । सूदं च तद-पश्च प्रीणाति ते ऽइष्ट्वा प्रीत्वाथैने सम्भरति व्यतिषक्ताभ्यां जुहोति * सूदं च तदपश्च व्यति-षजति † ॥ १७ ॥

आज्येन जुहोति । वज्रो वा ऽआज्यं वज्र मेवास्मा ऽएतदभिगोप्तारं करोत्यथो रेतो वा ऽआ-ज्यं रेत एवैतत् सिञ्चति स्रुवेण वृषा वै स्रुवो वृषा वै रेतः सिञ्चति स्वाहाकारेण वृषा वै स्वाहा-कारो वृषा वै रेतः सिञ्चति ‡ ॥ १८ ॥

आ त्वा जिघर्मि मनसा घृतेनेति §। आ त्वा जुहोमि मनसा च घृतेन चेत्येतत् प्रतिक्षियन्तं

---

* ग घ-पुस्तकयोरत्र (।) छेदोऽस्ति ।

† 'व्यतियजति'—इति क ।

‡ 'सिञ्चति'—इति क ।

§ 'घृतेनेति'—इति ग, घ, 'घृतेनेति'- इति क, ख ।

भुवनानि व्यिश्वेति प्रत्यङ् ह्येष सर्व्वाणि भुवनानि क्षियति पृथुं तिरश्चा वयसा बृहन्त मिति पृथुर्वा ऽएष तिर्य्यङ् वयसो बृहन्भूमेन व्यचिष्ठ मन्नेरभसं दृशान मित्यन्नकाशवन्त मन्नैरन्नाद्दं दीप्यमान मित्येतत् * ॥ १६ ॥

आ विश्वतः प्रत्यञ्चं जिघर्म्मीति † । आ सर्व्वतः प्रत्यञ्चं जुहोमीत्येतदरक्षसा मनसा तज्जुषेतेत्यपीडमानेन मनसा तज्जोषयेतेत्येतन्मर्य्यश्री स्पृहयद्वर्णो ऽअग्निरिति मर्य्यश्रीर्ह्येष स्पृहयद्वर्णो ऽग्निर्नाभिमृशे तन्वा जर्भुराण इति न ह्येषो ऽभिमृशे तन्वा दीप्यमानो भवति ॥ २० ॥

द्वाभ्या मभिजुहोति । द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवेन मेतदन्नेनो भूतए सिञ्चत्याग्नेयीभ्या मग्नि मेवैतदन्नेनोभूतए सिञ्चति ते यदाग्नेय्यौ तेनाग्निरूप यत् त्रिष्टुभौ तेनैन्द्र ऐन्द्राग्नो ऽग्निर्यावानग्निर्यावत्यस्य

* 'मित्येतत्'—इति ग, घ ।

† 'जिघर्मीति'—इति ग, घ । 'जिघर्मीति'—इति ख, ङ ।

भवत्यथ यन्न्यूनं व्यृद्धं तदेतद्वै वेतसः समृद्धं यत् समविलं चतुःस्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्वाभ्य एवैनमेतद्दिग्भ्यः खनति ॥ २६ ॥ १ ॥

॥ इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् [३. ३.] ॥

कात्यायनः— "अग्निषु ज्वलत्सु पिण्डं गच्छन्त्यग्निम्पुरीष्य मिति"-इति *। गार्हपत्यादिषु त्रिष्वग्निषु दीप्यमानेषु "अग्निम्पुरीष्य मिति मन्त्रेण मृत्पिण्डमभिमुख्य गच्छेयुरित्यर्थः। तद्विधत्ते— "प्रदीप्ता एतेऽग्नय इति। "अच्छयन्तीति। अभिगच्छन्तीति। ब्रह्माध्वर्युयजमानाः। 'अच्छ'-शब्दस्य "अच्छ गत्यर्थवदेषु"-इति † गतिरुक्ता। अग्निसाविध्यं प्रशंसति— "इमे वै लोका इति। 'अग्रे' पूर्वं 'देवाः' 'एभ्यो लोकेभ्यः' 'पुरः' पूर्वस्मिन् प्रदेशे, लोकानां पुरःप्रदेशे कर्मयजन मण्डितवन्तः। 'अत' तस्मात् 'एतान्' लोकत्रयात्मकान् 'अग्नीन्' ('अतीत्य') 'प्रादीप्य' प्रज्वाल्य 'मृदम्' आहरेयुः। अग्निषु ज्वलत्सु मृदानयनमेलोकानां पुरोदेशे मृद्रूप मग्निं कृतवन्तो भवन्ति ॥ १ ॥

तत्र गच्छतां अध्वर्युप्रभृतीनां प्राङ्मुखत्वं विधत्ते— "प्राञ्चो यन्तीति ॥ २ ॥

अभिगमने मन्त्रं विधत्ते— "ते प्रयन्त्यग्निम्पुरीष्य मङ्गिरस्वदच्छेम इतीति ‡। 'पुरीष्य' पशुहितं मृद्रूपम्, 'अङ्गिरस्वत्' अग्निवत् 'अच्छेम' अभिगच्छामः ॥ ३ ॥

* का० श्रौ० सू० १६. २. ११।
† पा० सू० १. ४ ६९। ‡ वा० सं० ११. १६।

पूर्वं पुरुषपश्वोः प्रतिनिधित्वेन अनडापुरुष उक्तः *, तस्ये-दानीं विनियोग माह— "अथानडापुरुष मीक्षत इति †। देव-पितृमनुष्यानर्थकः स इति प्रागुक्तः ‡। 'भरिष्यामः' धार-यिष्याम इत्यर्थः। अनडापुरुषनिरीक्षणं तेनाग्नेरन्वेषण मित्येतत् ॥ ४ ॥

अथ सूत्रम्— "पिण्ड मपरेण व्यध्वे वल्मीकवपां छिद्रां निद-धाति"—इति §। अश्वादिपशूनां शिरस्सु प्राभिधानीबन्धनात् पूर्वं स्वपिण्डस्य पश्चिमदेशे 'व्यध्वे' पिण्डाहवनीययोरर्द्धपथे सच्छिद्रा वल्मीकवपा निधेयेत्युक्तम्; इदानीं "वल्मीकवपामादाय छिद्रेण पिण्ड मीक्षतेऽग्निरिति"—इति ‖; तदिदं विधिद्वयं दर्शयति— "अथ वल्मीकेति। पूर्व मेव व्यध्वे सुषिराया वल्मीक-वपायाः स्थापनं सूचयितुं 'निहिता'—इति भूतकालवाचि क्तान्तं पदम्, 'ता मनु' हितां तथा मनुगच्छ ईक्षेत, तद्वं वपाच्छिद्रेण पिण्ड पश्येदित्यर्थः। "इयं वै वल्मीकवपेत्यादेरय मर्थः;—वल्मीक-वपा नाम 'इयं' भूमिः; तत्कार्यत्वात्। भूमिर्हि सर्वे लोकाः तत्प्रमुखत्वात् इतरेषां कर्मभूमित्वेन विशिष्टत्वाच्च। पूर्वं 'देवाः' 'एनम्' अग्निम् 'अपु' सर्वलोकेषु 'विषाहम्' ऐच्छन्, विषह्य-प्राप्नोति सर्वमाविष्टवन्तः, इदानीं तच्छिद्रेण पिण्डनिरीक्षणं सर्वलोकेषु स्वरूपस्याग्नेर्विचक्षणान्वेषण मिति ॥ ५ ॥

---

* १८० पृ० १६ पं० द्रष्टव्यम्।

† का० श्रौ० सू० १६ २ २२।

‡ १५७ पृ० ४ पं० भाष्यं द्रष्टव्यम्।

§ का० श्रौ० सू० १६ २ ३।

‖ का० श्रौ० सू० १६ २ २४।

निरीक्षणे मन्त्रं विधत्ते— "अन्वग्निरिति *। प्रजापति-रूपेणाग्निः स्तूयते— "अन्वग्निरिति। 'उषसाम् अग्रम्' आदि-स्थम् 'अनु'-लक्ष्य अग्निम् 'अन्वख्यत्' अनुदीप्यते। 'प्रथमः' आद्यः 'जातवेदाः' जातप्रज्ञः। जातानि भूतानि वेत्तीति वा, जाते जाते विद्यते जायत इति वा जातवेदाः †। अहानि 'अनु'-लक्ष्य दीप्यते। 'पुरुत्रा' बहुषु देशेषु 'सूर्यस्य रश्मीन्' 'अनु'-लक्ष्य दीप्यते। एवं परोक्षेणोक्त्वा परार्धपादेनाग्निं सम्बोध्याह— स त्वमग्ने। 'द्यावापृथिवी' 'अनु'-लक्ष्य 'आततन्थ' स्वतेज आतेनिथ। "बभूथाततन्थजगृभ्मववर्थ०"—इति ‡ निगमे इडभावेन निपातितः॥

मन्त्रस्य तात्पर्यमाह— "तदेन गुप स्वेच्छमित्यादिना। "परा पश्यतीति। यदा पिण्डं छिद्रेण पश्येत्, तदा 'मृदम्' 'अवख्यति' विनोति, जानाति। 'अथ' 'ताम्' मृदं अभि-लक्ष्य गच्छेदिति ॥ ६ ॥

"अथाह मिति §। "एत ह देवा इति। पूर्वं 'देवाः' पथि यान्तस्य अश्वस्य श्रमलक्षणं पाप्मानमपहतवन्तः, एवम् अभिमन्त्रणेन पथि यातस्य श्रमापनयनं भवति ॥ ७ ॥

मन्त्रं विधत्ते— "आगत्य वाजीति ‖। 'वाजी' वेगवान् बलवान् अश्वः 'अध्वानं' मार्गम् 'आगत्य' 'सर्वाः' 'मृधः' सङ्गा-

---

* वा० सं० ११. १७ ।
† निरु० ७. ५. १ द्रष्टव्यम् ।
‡ पा० सू० ७. २. ६४ ।
§ का० श्रौ० सू० १६. २. १६ ।
‖ वा० सं० ११. १८ ।

मान् 'विधूनुते' कम्पयति । 'सहति सधस्थे' पृथिव्यां वर्त्तमानम् 'अग्निम्' 'चक्षुषा' 'निचिकीषते' द्रष्टुमिच्छति ।

द्वितीयं पादं व्याचष्टे— "पाप्मा वै मृध इति । कथ माऽऽत्मविधूननमिति, तदुपपादयति— "तस्मादु हैतदिति । 'अत्र.' 'स्थित्वा' स्थन्दतेः क्त्वा-प्रत्यये इडभावे नलोपे च कृते रूपम् । अध्वानं गत्वा स्वशरीरं 'विधूनुते' कम्पयति ॥ ८ ॥

अथ सूत्रम्— "आक्रम्येत्येतेन-पिण्ड मधिष्ठापयति"—इति * । एनेनेत्यश्वोऽभिधीयते । "आक्रम्य 'वाजिन्'"—इति मन्त्रेण † पिण्ड तेनैवाश्वेनाधिष्ठापयति आक्रमयतीत्यर्थः । तद् विधत्ते— "अश्वेन माक्रमयतीति । 'एनं' मृत्पिण्ड तदश्वेनाक्रमयेदित्यर्थः । "एतद्वा इति । पूर्वं 'यथा' 'एनम्' अश्वम् अग्निस्थानम् 'अनुविद्य' लब्ध्वा 'देवेभ्यः' 'अयम्' अग्निः 'इह' देशे तिष्ठतीति पादाक्रमेण 'प्राब्रवीत्', 'एवम्' अश्वेन पिण्डाधिष्ठापनं नाम, तस्मादग्नेर्वेदन मित्यर्थः ॥ ९ ॥

आक्रमणं प्रकारान्तरेण स्तौति मनुवदति— "यद्वेवेति । 'देवाः' रक्षोभ्यो भीतवन्तः 'एतं' 'वज्रम्' वज्ररूप मश्वम् आदित्यम् 'उपरिष्टात्' उपरि भागे 'अभिगोप्तारं' रक्षकम् 'अकुर्वन्' । आदित्यस्याश्वरूपता प्रागुक्ता ‡ । 'तथैव' तेन प्रकारेण 'अस्मै' पिण्डरूपायाग्नये 'अयम्' अनुष्ठाता अश्वाक्रमणेन 'एतं' वज्ररूप

---

* का० श्रौ० सू० १६ २ १७।

† वा० सं० ११. १९।

‡ १ ६ ३ ३ (१ भा० ४०७ पृ० १ पं०)। ३ ४ २. १९, २० (३ भा० २७५, २७६ पृ०)। "असौ वा आदित्य एषोऽश्वः"—इति चाग्रेतरत्र (७ ३ २. १८)। "सूरादश्वं वसवो निरतष्ट" इति च वा० सं० २९ १३ ।

अत्र आदित्यम् 'उपरिष्टात्' उपरि भागे 'अभिगोप्तारं' रक्षकं 'करोति' कृतवान् भवतीति ॥ १० ॥

मन्त्रं विधत्ते— "आक्रम्य वाजिन्निति*। हे 'वाजिन्' अश्व ! 'त्वं' 'पृथिवीम्' 'आक्रम्य', 'रुचा' "रुच दीप्तौ"†, क्विबन्तात् तृतीयैकवचनम्, अनेन 'चक्षुषा' 'अग्निम्' 'इच्छ', कुत्र तिष्ठतीत्यन्वेषणं कुरु। 'वृत्वाय' वृणोतिर्वर्तसंज्ञाने क्त्वा, वृत्वायेति क्त्वो यत्। अथ, वृ-धातुः स्पर्शनार्थः; धातूना मनेकार्थत्वात्। 'भूम्याः'-इति कर्मणि षष्ठी, भूमिम्, 'वृत्वाय' स्पृष्ट्वा, भूप्रदेशं स्पर्शयित्वा 'नः ब्रूहि', 'यतः' यस्मात् प्रदेशात् 'तम्' अग्निरूप मग्निं 'खनेम' इति ॥

अत्र मन्त्रे 'रुचा'-इति, 'वृत्वाय'-इति पदे व्याचष्टे— "चक्षुर्वै रुगिति, "भूम्याः स्पर्शयित्वायेति। "स्पृश आधानस्पर्शनयोः‡"-इत्यस्य रूपम्, "स्पार्शयित्वायेति, पूर्ववत् क्त्वो यत् ॥ ११ ॥

अश्वाभिमन्त्रणं विधत्ते— "अथैनं सुम्मृशतीति§। 'सौचि-वाहृषम्' अत्राग्निस्तिष्ठतीति बोधयन्तम्। उपस्पर्शनं नाम अश्वपृष्ठस्योपरि पाणिधारणम्। मन्त्रं विधत्ते— "द्यौस्त इति‖। हे, अश्व ! 'ते' तव 'द्यौः' द्युलोकः 'पृष्ठम्' उपरि भागः, 'पृथिवी' 'सधस्थम्' सहस्थानम्, पादावित्यर्थः; 'आत्मा'

---

* वा० सं० ११. १६ ।
† धा० पा० ७४५ धा० ।
‡ धा० पा० ८८७ धा० ।
§ का० श्रौ० सू० १६. २. १८ क. ।
‖ वा० सं० ११. २० ।

शरीरम्, 'अन्तरिक्षम्', 'समुद्रः' उदकं 'योनिः' उत्पत्तिस्थानम्। तादृशः 'त्वम्' 'चक्षुषा' 'विख्याय' निरीक्ष्य, 'पृतन्यतः' सङ्ग्रामिच्छून् पुरुषान् 'पाप्मनः इति' 'एतत्' 'अभितिष्ठ' सहस्व। 'पृतना'-शब्दात् क्यचि "काव्यध्वरपृतनस्यर्चि लोपः"-इति * अवर्णस्य लोपः॥

पूर्वार्द्धस्य तात्पर्यमाह— "द्यु मसीत्य मसीति। 'द्युलोकात्मासि, पृथिव्यात्मासि'-इत्याद्यर्थो वीप्सातः। उत्तरार्द्धगतं पृतन्यत्पदं व्याचष्टे— "सर्वान् पाप्मन इत्येतदिति। अत्र सूत्रम्— "अनुपस्पृशन्नुत्क्रामेत्युत्क्रमयति"-इति †। अश्वं तमस्पृशन्नेवोत्क्रामेति मन्त्रेणाश्वमुत्क्रामणं कारयेदित्यर्थः। तद् विधत्ते— "नोपस्पृशतीत्यादि॥ १२॥

"अनेन सुत्क्रमयतीति। अश्वोत्क्रमणस्य प्रयोजनं वक्तुं देवानां मन्त्र माह— "किं मिम मभ्युत्क्रमिष्याम इतीति। किम्प्रयोजनम् मुद्दिश्येति तस्यार्थः। प्रयोजनमाह— "महत्सौभग मितीति। मन्त्रं विधत्ते— "उत्क्रामेति ‡। हे 'वाजिन्!' हे 'द्रविणोदः!' धनस्य दातः!, त्वम् 'अस्मात् स्थानात्' पूर्वमवस्थिताद् देशात् 'उत्क्राम' उद्गच्छ 'महते' 'सौभगाय' ऐश्वर्यायेति तदर्थः। 'अस्याः' पृथिव्याः 'उपस्थे' उपस्थाने 'अग्निम्' उद्दिश्य भक्तिपरं 'खनन्तः' वयम् 'अस्याः' पृथिव्याः 'सुमतौ' शोभनदानादियुक्तमतौ 'स्याम' भवेमेति॥

अश्वस्य सौभाग्य माह— "तस्मादु हैतदश्वः परमा मिति।

---

* पा० सू० ७।४।३९।

† का० श्रौ० सू० १६।२।१८।

‡ वा० सं० ११।२१।

ये अश्वा व्यापनशीलाः शीघ्रगामिनः तेषां मध्ये अयमश्वो 'अभि-रामः' अतिशयेन भाग्यवान्, 'राजवाहनत्वात्। 'अश्वादाख्यानात्' -इति पदं व्याचष्टे—"यवैतत् तिष्ठसीति ॥ १३ ॥

पुनरप्यश्वस्याभिमन्त्रणं विधत्ते— "अथैन मुत्क्रान्त मभि-मन्त्रयत इति *। पूर्वं 'देवाः' यथा 'एनम्' अग्निम् 'शोषिवांसं' उक्तवन्तो 'ददिवांसं' धनं दत्तवन्तं लोको 'वन्देत' स्तुवीत, 'एवं' वय मपीति अश्वम् 'अस्तुवम्', 'अमहयम्' अपूजयं च; 'तथा' अनुष्ठातापि अभिमन्त्रणेन स्तुतवान् पूजितवान् भवति ॥

मन्त्रं विधत्ते— "उदक्रमीदितीति †। 'द्रविणोदाः' धनस्य दाता, 'अर्वा' अरणशीलो 'वाजी' वेगवान् अश्वः 'उदक्रमीत्' ऊर्ध्वं पादविक्षेपम्, पृथिव्याः 'सुकृतं' सुष्ठु निष्पादितम् 'सुलोकं' शोभनं लोकम् 'अकः' कृतवान्। स्वकार्यकारणयोरपि साधुत्वं द्योतयितुं उभयत्र सुशब्दप्रयोगः। अकरिति, करोतेर्लुङि "मन्त्रे घसह्वरणशेति ‡ च्लेर्लुकि, गुणे, तिलोपे रूपम्। यद्यपि प्रथमपुरुषैकवचने तिल्लोपे च रूपं समानम्, तथापि 'अकरः सुप्रतीकम्'—इति ब्राह्मणव्याख्यानानुसारेण मध्यमः, तद् व्याख्यात मकरिति। तर्हि करोतेर्लुङि च्लेः "कृमृदृरुहिभ्यश्छन्दसि"--इति § अङादेशे, गुणे, मध्यमपुरुषकारस्य रुत्वविसर्गयोः कृतयोः रूपम्। 'ततः' तस्मात् प्रदेशात् 'सुप्रतीकं' शोभनावयवम् 'अग्निम्' मद्रूपम्। 'खनेम'। किं कुर्वन्तः? 'नाकं' क इति सुखनाम,

---

* का० श्रौ० सू० १६ २ १६ ।
† वा० सं० ११ २२ ।
‡ पा० सू० २ ४ ८० ।
§ पा० सू० ३ १ ५९ ।

सुसंस्कारत्वादुपदेशः *। "तां हुत्वेति। प्रथमाहुतिं हुत्वा लोकत्रयात्मिकाम् 'उखाम्' 'अपश्यन्' ॥ १५ ॥

"तेऽब्रुवन्निति। द्वितीयाहुतिं हुत्वा विश्वज्योतिर्नामेष्टका दृष्टवन्तः। विश्वज्योतिश्शब्दकानां तिसृणा मिष्टकानां देवतासम्बन्ध माह— "अग्निं वायु मादित्य मिति। "व्यतिषक्ताभ्यां जुहोति"–इति व्यतिषङ्गप्रकारः पूर्वं उक्तः †, ताभ्यामृग्भ्यां हवनेन प्रीणितमेभ्यो लोकाम् 'एताः' अग्निवाय्वादित्यस्वरूपा देवताश्च व्यतिषक्तवत्यो भवन्ति; पृथिवीलोकस्याग्निम्, अन्तरिक्षलोकस्य वायुम्, द्युलोकस्यादित्य मिति ॥ १६ ॥

प्रकारान्तरेणाहुतिद्वयं स्तोतु मनुवदति— "यद्देवेते आहुती इति। आहुतिद्वयेन मृद मपश्च प्रीणितवान् भवति। यतो व्यतिषक्ताभ्या मृग्भ्यां होमः, अतो मृद मपश्चोखार्थं संयोजयति ॥ १७ ॥

होम्यं द्रव्यं विधत्ते— "आज्येन जुहोतीति। आज्यस्य वज्रत्वं प्रागुक्तम् ‡। होमकरणं विधत्ते—"स्रुवेणेति। मन्त्रान्ते 'स्वाहा'-शब्दः प्रयोक्तव्य इत्याह— "स्वाहाकारेणेति। जुहोतीत्यनुषङ्गः ॥ १८ ॥

मन्त्रं विधत्ते— "आ त्वा जिघर्मीति §। मन्त्रस्याय मर्थः,– 'मनसा' 'घृतेन' आज्येन च त्वाम् 'आजिघर्मि'। "प्रत्य-

---

* का० श्रौ० १६. २. २१ सूत्रीयं व्याख्यानं द्रष्टव्यम्।

† एतत्पूर्वकण्डिकाप्रक्रमे (१४० पृ० ८ पं०) द्रष्टव्यम्।

‡ का० १. ४ ३. ४ (१ भा० ९९२ पृ०) द्रष्टव्यम्।

§ वा० सं० ११. २३।

दीप्त्योः" *। आ जुहोमि, आसिञ्चामि, आज्यं सिञ्चामीत्यर्थः। अग्निं विशिनष्टि पादत्रयेण— 'विश्वा सर्वाणि भुवनानि प्रति चियन्तम्' सर्वत्र भूतजातेषु निवसन्त मित्यर्थः। 'तिरश्चा' —इति भावपरो निर्देशः, 'पृथु' विस्तृतम्। यद्वा, 'तिरश्चा' —इति धूमविशेषणम्; 'वयसा' धूमेन 'बृहन्तम्'। अत एव 'व्यचिष्ठ'' व्यापनवन्तम्, अवकाशवन्तम्। 'अन्नैः' स्वस्मिन् हुतैर्घृतादिभिः, 'रभसम्' उत्साहवन्तम्। अत एव 'दृशानं' दर्शनीयं, दीप्यमानम्। अग्निं त्वा आजिघर्मीति सम्बन्धः॥

मन्त्रं प्रतिपाद्य मनूद्य व्याचष्टे— "आ त्वा जुहोमीति। व्यचिष्ठ-रभस-पदयोर्व्याख्यानम्—"अवकाशवन्त मुत्साह मिति ॥ १८ ॥

द्वितीयं मन्त्रं विधत्ते—'आ विश्वत इति †। अस्यार्थः,— 'विश्वतः' सर्वतः 'प्रत्यञ्चं' प्रत्यगात्मतया प्रतीयमान मग्निम्, 'अरक्षसा' रक्षोदोषरहितेन 'मनसा' युक्तः अहम् 'आजिघर्मि' आसिञ्चामि। 'तत्' इदं 'जुषेत' सेवेत इति परोक्षनिर्देशः, युष्मच्छब्दसमानार्थो भवच्छब्दाध्याहारो वा। 'मर्यश्रीः' म्रियतेः कर्मणि क्विप्, मर्यैर्मनुष्यैराश्रयणीयः। 'स्पृहयद्वर्णः' स्पृहयन् परेषां रुचिमुत्पादयन् वर्णो यस्य, शुक्लभास्वररूपत्वात्। 'तन्वा' शरीरेण 'अभृंराणः' दीप्यमानो 'अग्निः' 'नाभिमृशे' तुमर्थे केन्प्रत्ययः ‡, अभिमर्शनीयो न भवति॥

---

* जु० प० १४ धा० ।
† वा० सं० ११. २४ ।
‡ पा० सू० ३. ४ ॥ इत्यम् ।

"स एतान् पञ्च पशून् प्राविशत् , स पशी"–इत्यादिना * ॥ २२ ॥

अत्र सूत्रम्— "अभ्रया तिसृभिः परिलिखति परि वाज-पतिरिति, बहिर्बहिरङ्गारयोरन्तरयोरिति †। एतं सूत्रपदं "परि-वाज पतिः"–इत्यादिभिस्तिसृभिः ‡ उत्तरोत्तराधिकच्छन्दस्काभिः त्रिवारं परिलिखेदिति। तदिदं विधत्ते— "अथैनं परिलिख-तीत्यादि। परिलेखनेन 'अस्मै' अग्न्युपायाग्नये 'मात्रां' परि-च्छेदम् , इयत्ताम् 'करोति' तावान् भवति। तदेव विवृणोति— "यथैतावानिति ॥ २३ ॥

"यद्वेवैनं परिलिखतीति। परिलेखनं प्रशंसितुं देवकथामाह— "एतद्वै देवा इति। 'एतां पुरं' रेखारूपां पुरं परि-चिन्तवन्तः। परिलेखने साधनं विधत्ते— "अभ्रेणेति §। "सर्वतः परिलिखतीति। चतुर्दिशं तथा मित्यर्थः। परिलेख-नस्य त्रित्वं विधत्ते— "त्रिष्कृत्व इति। त्रिवारं परिलेखनेन 'त्रिवृत्' त्रिगुणितं 'वप्रम्' 'अस्मै' अग्न्यायतनाय 'अभिगोप्तारं' रक्षकं कृतवान् भवति ॥ २४ ॥

मन्त्रं विधत्ते— "परि वाजपतिरिति। आद्या गायत्री ‖, "परि त्वाग्ने पुरं वयम्"–इति द्वितीया अनुष्टुप् ¶, "त्वमग्ने द्युभिः"–इति तृतीया त्रिष्टुप् **; तिस्रोऽप्याग्नेय्यः। यतो-

---

* पुरस्तादिहैव (५३ पृ० ६ पं०) द्रष्टव्यम्।
† का० श्रौ० सू० १६ २ २२क।
‡ वा० सं० ११. २५, २६, २७।
§ का० श्रौ० सू० १६ २ २२ख।
‖ वा० सं० ११ २५।
¶ वा० सं० ११ २६।
** वा० सं० ११. २७।

ऽग्निदेवत्यः, अत एताभिः परिलेखनेन अग्नि मेव 'वर्म' कवचं कृतवान् भवति ।

मन्त्रत्रयगतं परिशब्दं स्तौति— "परिवतीभिरिति । यतो रेखाः पुरात्मिकाः, अतस्तासां परिशब्दयुक्ताभिः ऋग्भिः करणेन प्राकारपरिवृतपुरात्मकत्वं युक्तम् । मन्त्रगतं त्रित्वं प्रशंसति— "तिसृभिस्त्रिपुर मेवेति । प्राकारत्रयपरिवृतत्वं पुरां सुत्कृष्टतमं रूपम् । "स वै वरीयसेत्यादि । अस्यायमर्थः, 'सः' अध्वर्युः 'वरीयसा' छन्देन, ततोऽपि 'वरीयसा' छन्दान्तरेण 'छन्दसा', उत्तरोत्तराधिकच्छन्दस्काभिः ऋग्भि रित्यर्थः । छन्दांसि इदानीं प्रदर्शितानि, ताभिर्ऋग्भिः रेखा अपि उत्तरोत्तरवरीयसीं महत्तरां करोति । तस्मादुत्तरोत्तराधिकरेखात्रयकरणेन तादृग्भूतप्राकारेण पुरेण मृत्पिण्डं रक्षितवान् भवतीति ॥ २५ ॥

अथ पिण्डखननं विधत्ते— "अथैन मस्यां खनतीति * । 'अस्यां' भूमौ 'एनत्' पिण्डं खनेदिति । आधेयाधिकरणभावेन भूमिमृत्पिण्डयोः प्रतीयमानं पार्थक्य मपाकरोति— "एतद्वै देवा इति । पूर्वं देवा रक्षोभीत्या 'तस्मै' पिण्डाय 'इमां' भूमि मेव 'आत्मानं' स्वरूपम् 'अकुर्वन्' । स्वरूपं स्वरूपरक्षकं भविष्यतीत्यतो हेतोः रक्षणाय 'सा' खन्यमाना भूमिः 'समन्विता' चतुर्दिशं समानविस्तरा कर्त्तव्या । अयमर्थः,— यावत्य उखापादादय इष्टकाः कर्त्तव्याः, तावत्परिमाण मेवेदं खनेत् । समन्वितत्वं स्तौति— "यदेव समन्वितेति । 'इयं' भूमिः 'योनिः' अग्न्युत्पत्तिस्थानम्, 'इदं रेतः' उखा-

* का० श्रौ० सू० १६ ३. ३२ ।

पादादूर्ध्वं खन्यमानं सत्स्वरूपं रेतः; अत 'रेतसः' सम्बन्धी बिन्दुः, यावत् 'योनिम् अतिरिच्यते', तावत् उखादिपर्याप्तो मृत् खनितुं शक्येत्यर्थः। "चतुःस्रक्तिरेव कूप इति *। मृदर्थं खन्यमानः कूप चतुरस्रः कर्त्तव्यः। स्रक्तीश्चतुर्दिगात्मना स्तौति — "चतस्रो वै दिश इति † ॥ २६ ॥ १ [ ३. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ २ ॥

ब्रह्माण्डं गोसहस्रं कनककरयतुलापूरुषौ स्वर्णगर्भम् ,
सप्ताब्धीन् पञ्चसीरीस्वदयतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मराजिद्विपसहितरथौ सायणिः सिङ्गणार्यः ,
व्यश्राणीद्धेमवर्णं मथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलमय मतुल. स्वर्णजं वर्णमुख्यः ,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।

---

* अथैष एवैतस्य स्रगाकारो रज्जुरिव हि सर्पाः, कूपा इव हि सर्पाणा मायतनानि"—इति ह्येतस्मिन्नेव काण्डे श्रुतम् ६ ५. ३ ।

† "अधि" खनन्ति उपस्थे पृथिव्याः"—इति च (वा० सं ११ ३१.) ।

पाव्योतिं प्राज्यजन्मा लवणज मृदुणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि महात मुदा पावसाखिङ्गणार्यः ७ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे तृतीयाध्यायः समाप्तः ॥ ३ ॥

---

* पद्यमादीप्यन्तः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः ।

( अथ चतुर्थेऽध्याये प्रथमं ब्राह्मणम् . )

---

अथैन मतः खनत्येव* । एतद्वा ऽएनं देवा अनुविद्याखनंस्तथैवैन मय मेतदनुविद्य खनति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थादग्निं पुरीष्य मङ्गिरस्वत् खनामीति सवितृप्रसूत एवैन मेतदेताभिर्देवताभिः पृथिव्या उपस्थादग्निं पशव्य मग्निवत् खनति ॥ १ ॥

ज्योतिष्मन्तं त्वाग्ने सुप्रतीक मिति । ज्योतिष्मान्वा ऽअग्निः † सुप्रतीको ऽजस्रेण भानुना दीद्यत मित्यजस्रेणार्चिषा दीप्यमान मित्येतच्छिवं प्रजाभ्यो ऽहिंसन्तं पृथिव्याः सधस्थादग्निं पुरीष्य मङ्गिरस्वत् खनाम इति शिवं प्रजाभ्यो ऽहिंसन्तं पृथिव्या उपस्थादग्निं पशव्य मग्निवत् खनाम इत्येतत् ‡ ॥ २ ॥

---

* 'खनत्येव'—इति ग, घ ।

† 'ऽयमग्निः'—इति ग, घ ।

‡ 'इत्येतत्'—इति ग, घ ।

द्वाभ्यां खनति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् खनत्यथो द्वयए्ं ह्येवैतद्रूपं सत्त्वापस्य ॥ ३ ॥

स वै खनामि खनाम इति खनति। खनामीति वा ऽएतं प्रजापतिरखनत् खनाम इति देवास्तस्मात् खनामि खनाम इति * ॥ ४ ॥

स वा ऽअथ्या खनन्। व्वाचा खनामि खनाम इत्याह व्वाग्वा ऽअभ्रिरारब्धायैवेयं व्वैग्वी क्रियते व्वाचा वा ऽएत मथ्या देवा अखनंस्तथैवैन मयं मेतद्वाचैवाभ्या खनति † ॥ ५ ॥

अथैनं कृष्णाजिने सम्भरति। यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैन मेतत् सम्भरति लोमतश्छन्दाएंसि वै लोमानि छन्दःस्वेवैन मेतत् सम्भरति तत्तूष्णी मुपस्तृणाति यज्ञो वै कृष्णाजिनं प्रजापतिर्व्वै यज्ञो ऽनिरुक्तो वै प्रजापतिस्तस्तत्स्योपरि वधुः प्राचीनग्रीवे तद्धि देवत्रा ‡ ॥ ६ ॥

---

* 'इति'—इति ग, घ।

† 'खनति'—इति क।

‡ 'देवत्रा'—इति ग, घ।

अथैनं पुष्करपर्णे सम्भरति । योनिर्व्वै पुष्करपर्णं योनौ तद् रेतः सिञ्चति यद्वै योनौ रेतः सिच्यते तत् प्रजनिष्णु भवति तन्मध्येनोपस्तृणाति मध्यतो ह्ययं वाक् पुष्करपर्णम् ॥ ७ ॥

अपां पृष्ठ मसि योनिरग्नेरिति । अपाᳩ ह्येतत् पृष्ठं योनिर्ह्येतदग्नेः समुद्र मभितः पिन्वमान मिति समुद्रो ह्येतदभितः पिन्वते वर्द्धमानो महाँ२॥ऽआ च पुष्कर ऽइति वर्द्धमानो महीयस्व पुष्कर ऽइत्येतद्दिवो मात्रया वरिम्णा प्रथस्वेत्यनुविमार्ष्ट्यसौ वा ऽआदित्य एषोऽग्निर्नो हैतमन्यो दिवो वरिमा यन्तु मर्हति द्यौर्भूत्वैनं यच्छेत्येवैतदाह ॥ ८ ॥

तदुत्तरं कृष्णाजिनादुपस्तृणाति । यज्ञो वै कृष्णाजिन मियं वै कृष्णाजिन मियमु वै यज्ञोऽस्याᳩ हि यज्ञस्तायते द्यौः पुष्करपर्ण[§] मापो वै द्यौरापः पुष्करपर्ण मुत्तरो वा ऽअसावस्यै ॥ ९ ॥

अथैनं ऽअभिमृशति । सञ्ज्ञा मेवास्मा मेतत्

§ 'द्यौ पुष्कर०'—इति क, ख, 'द्यौष्पुष्कर०'—इति ग।

द्वाभ्यां खनति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् खनत्यथो द्वयं ह्येवैतद्रूप मस्यापस्य॥ ३॥

स वै खनामि खनाम इति खनति। खनामीति वा ऽएतं प्रजापतिरखनत् खनाम इति देवास्तस्मात् खनामि खनाम इति *॥ ४॥

स वा ऽअभ्या खनन्। व्वाचा खनामि खनाम इत्याह व्वाग्वा ऽअभिरारम्भायैवेयं व्वैणवी क्रियते व्वाचा वा ऽएत मभ्या देवा अखनंस्तथैवैन मय मेतद्वाचैवाभ्या खनति †॥ ५॥

अथैनं कृष्णाजिने सम्भरति। यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैन मेतत् सम्भरति लोमतश्छन्दांसि वै लोमानि छन्दः स्वेवैन मेतत् सम्भरति तत्तूष्णी मुपस्तृणाति यज्ञो वै कृष्णाजिनं प्रजापतिर्व्वै यज्ञो ऽनिरुक्तो वै प्रजापतिस्तत्तस्योपरि बभ्रुः प्राचीनग्रीवे तद्धि देवत्रा ‡॥ ६॥

---

* 'इति'—इति ग, घ।

† 'खनति'—इति क।

‡ 'देवत्रा'—इति ग, घ।

करोति शर्म च स्थो वर्म च स्थ इति शर्म च ह्येते वर्म चाच्छिद्रे बहुले ऽउभे ऽइत्यच्छिद्रे ह्येते बहुले ऽउभे व्यचस्वती संव्वसाथा मित्यवकाशवती संव्वसाथा मित्येतद् भृत मग्निं पुरीष्य मिति विभृत मग्निं पशव्य मित्येतत् * ॥ १० ॥

संव्वसाथाᳬ स्वर्व्विदा। समीची ऽउरसात्मनेति संव्वसाथा मेनᳬ स्वर्व्विदा समीची ऽउरसा चात्मना चेत्येतदग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्त मजस्र मिदित्यसौ वा ऽआदित्य एषोऽग्निः स एष ज्योतिष्मानजस्र मेते ऽअन्तरा बिभृतस्तस्मादाह ज्योतिष्मन्त मजस्र मिदिति ॥ ११ ॥

द्वाभ्या मभिमृशति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवाभ्या मेतत् सम्भ्रां करोत्यथो द्वयᳬ ह्येवैतद्रूपं कृष्णाजिनं च पुष्करपर्णं च ॥ १२ ॥ २ ॥

॥ इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् [४. १.] ॥

---

* 'मित्येतत्'—इति ग। 'मित्येतत्'—इति घ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ खननविधिं, खनन मन्त्रं विधत्ते — "अथैन मतः खनतीति *। 'अतः' अतःस्थलेः कूपात् 'अनुविद्य' लब्ध्वा । देवस्य त्वेति मन्त्रस्य तात्पर्यमाह — "सवितुः प्रसूत्या इति † ॥ १ ॥

खनने द्वितीयमन्त्रमाह— "ज्योतिष्मन्तं त्वाग्न इति ‡ । अयमर्थः । हे 'अग्ने !' 'ज्योतिष्मन्तं' ज्योतिर्युक्तं 'सुप्रतीकं' सुमुखावयवम्, 'अजस्रेण' अनवच्छिन्नेन 'भानुना' तेजसा 'दीद्यतं', व्यत्ययेन शप्प्रत्ययः, दीप्यमानम्; 'शिवं' शान्तम्, 'प्रजाभ्यः' प्रजार्थं शिवमिति सम्बन्धः; 'अहिंसन्तं' प्राणिनां हिंसामकुर्वाणम् । पृथिव्यादि व्याख्यातम् । तादृश मग्निं भूप्रदेशादभितः खनामः अश्वयैव इति ॥ २ ॥

खननमन्त्रगतां द्वित्वसङ्ख्यां यजमानरूपाभ्यात्मना प्रशंसति— "द्वाभ्यां खनति द्विपादिति । प्रकारान्तरेण स्तौति— "अथो द्वय मिति । मृत्तिका उदकानि चेति द्वय मित्यर्थः ॥ ३ ॥

---

* का० श्रौ० सू० १६. २. २२ ।

† "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । पृथिव्याः सधस्थादग्निम्पुरीष्य मङ्गिरस्वत् खनामि" वा० सं० ११. २८. १ ।

‡ "ज्योतिष्मन्तं त्वाग्ने सुप्रतीक मजस्रेण भानुना दीद्यतम् । शिवं प्रजाभ्यो ऽहिंसन्तं पृथिव्याः सधस्थादग्निं पुरीष्य मङ्गिरस्वत खनामः"—इति वा० सं० ११. २८. २ ।

यत् "देवस्य त्वा"–इति पूर्वमन्त्रः, तत्र खनामीत्येकवचनम् *, ज्योतिष्मन्त मिति द्वितीयमन्त्रे खनाम इति बहुवचनम् †, तस्योभयस्य निर्वाहमाह— "स वै खनामीति । प्रजापतिविवक्षया एकवचनम्, देवविवक्षया बहुवचनम् । ते च अग्निकर्माण्यत्यतिष्ठन् ॥ ४ ॥

प्रागुक्तं खननसाधनं विदधत् तस्य वायूपता माह— "स वा अभ्र्याखनदिति । यदि वाग्भिस्तर्हि वाचैव खननं युक्तम्, किमभ्रिकरणेनेति, तत्राह— "आरम्भायेति । 'आरम्भाय' आलम्भनायैव इयं वैणवी अभ्रिः ‡ क्रियते ॥ ५ ॥

अत्र कात्यायनः— "कृष्णाजिन मास्तीर्योत्तरलोम तस्मिन् पुष्करपर्ण मपाम्पृष्ठ मिति, विमार्ष्टि मह्न दिव इति, आलभत उभे शर्मं च स्थ इति"–इति §। अथ अर्थः। उत्तरतो देवि कृष्णाजिनं प्राग्ग्रीव मुत्तरलोमम् तूष्णी मास्तीर्य, तस्मिन् कृष्णाजिने अपाम्पृष्ठमसीतिमन्त्रेण ‖ पुष्करपर्णं मास्तृणाति । एतत् पुष्करपर्णं दिवो मात्रयेति ¶ चतुर्थपादेन विमार्ष्टि । ततः कृष्णाजिन पुष्करपर्णे "शर्मं च स्थो वर्मं च स्थः"–इति ** मन्त्राभ्या मालभेतेति ।

---

*, † २०५ पृ० द्वितीयतृतीयटीप्पन्युद्धृतयोर्मन्त्रयोरन्त्ये पदे द्रष्टव्ये ।

‡ वैणवी, कल्माषी, सुषिरा, प्रादेशमात्री, अन्यतःक्ष्णुत्, उभयतःक्ष्णुत्, तीक्ष्णा, औदुम्बरी, वैकङ्कती, अरत्निमात्री अभ्रिर्भवति । इहैव काण्डे पुरस्तात् (३. १. ३०.) द्रष्टव्यम् ।

§ का० श्रौ० सू० १६. ५. २३, २४, २५।

‖ वा० सं० ११. २९. १ ।

¶ वा० सं० ११. २९. २ ।

** वा० सं० ११. ३०, ३१ ।

तदिदं ब्राह्मणशेषेण विधीयते— "अथैनं कृष्णाजिन इति । यद्यपि कृष्णाजिनस्योपरि पुष्करपर्णे मृत्पिण्डसम्भरणम्, तथापि कृष्णाजिनसम्बन्धोऽप्यस्तीति मत्वा तस्मिन् सम्भरणोक्तिः । "लोमत इति । लोमवत्प्रदेशे ।

कृष्णाजिनास्तरणं समन्त्रक मित्याह— "तत् तूष्णी मिति । तूष्णी मुपस्तरण मुपपादयति— "यज्ञ इति । यज्ञस्य कृष्णाजिनत्वम् ; "कृष्णो रूपं कृत्वोदक्रामत्"–इत्याम्नानात् * । यज्ञस्य प्रजापतित्वम् ; प्रजापतिदेवत्यत्वात् । प्रजापतिर्हि सकलस्थूलसूक्ष्मप्रपञ्चात्मत्वेनाय मीदृगिति निर्वक्तु मनर्हत्वात् अनिरुक्तः । तस्मात् तद्रूपस्य कृष्णाजिनस्यापि आस्तरणम् 'अनिरुक्तम्', अमन्त्रक मित्यर्थः । तदास्तरणस्य प्रदेशं विधत्ते— "उत्तरत इति । आस्तरणस्तावकं ब्राह्मण मुत्तरत्र वक्ष्यत इत्याह— "तस्योपरि बन्धुरिति । "प्राचीनग्रीवेति । ग्रीवाप्रदेशः प्राचीनो यथा भवति तथा आस्तरणीयम् । 'देवत्रा' देवेषु भवति "देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्"–इति † देवशब्दात् 'त्रा'-प्रत्ययः ॥ ६ ॥

कृष्णाजिनस्योपरि विधातव्ये पुष्करपर्णे मृत्पिण्डसम्भरणं दर्शयति— "अयोन मिति । "योनिरिति । यतोऽग्निः पुष्करपर्णाद् जातः, तस्मात् तत् योनिरूपम्, अग्निश्च रेतोरूपः ; इदानी मुत्पद्यमानत्वात् 'प्रजनिष्णु' प्रजननशीलम् । "वाक् पुष्करपर्ण मिति । अग्निवाचोरन्यत्र तादात्म्यश्रवणात् ‡—"अग्नि-

* प्र० ब्रा० १. १. ४. १ (१ भा० ७१ पृ० ) ।
† पा० सू० ५. ४. ५६ ।
‡ तै० आर० १. ४. १ ।

वाग् भूत्वा मुखं प्राविशत्"–इति । पुष्करपर्णादग्निजननात् कार्यकारणयोरभेदोपचारेण वागेव पुष्करपर्ण मित्युक्तम् ॥ ७ ॥

तदास्तरणे मन्त्रं विधत्ते— "अपामपृष्ठ मिति * । हे पुष्कर-पर्ण ! 'अपामपृष्ठम्' उपरिस्थानम् 'असि', 'अग्नेः योनिः' च 'असि', 'समुद्रः' समुन्दनशील मुदकम् अभितः 'पिन्वमानं' वर्द्धमानं भवसि, किञ्च 'पुष्करे' 'वर्द्धमानः' जात एव 'आ' सर्वतः 'महान्' आस्तरणात् महत्त्वम् ; अत एव 'आ महान्'–इति पद-द्वयस्य 'महीयस्व'–इति व्याख्यानम् ।

अस्मिन्नयादेन विसर्जनं विधत्ते— "दिव इति † । 'दिवः' द्युलोकस्य मात्रया परिमाणेन 'वरिम्णा' अतिशयेनोरुणा त्वं 'प्रथस्व' विस्तीर्णो भव । पादं व्याचष्टे— "असौ वा आदित्य इति । यतः 'एषः अग्निः' 'आदित्यः', अतो लोकत्रय मस्य 'वरिमा' उरुत्वम्, 'एतम्' आदित्यात्मकं 'वर्ह्नि' परिच्छेतुं नार्हतीति । अतो 'द्यौः' द्युलोकात्मकं 'भूत्वा', 'एनं' वह्निरूपं 'यच्छ' परिच्छिन्नं कुर्विति पुष्करपर्णमार्थना ॥ ८ ॥

तदास्तरणस्य प्रदेश माह— "तदुत्तरं कृष्णाजिनादिति । 'तत्' पुष्करपर्ण 'कृष्णाजिनात्' 'उत्तरं' तस्योपरि 'आस्तृणाति' एतस्योपरि अस्यास्तरणं भूलोकद्युलोकात्मना प्रशंसति— "असौ वा इति । कृष्णाजिनपुष्करपर्णयोः भूलोकद्युलोकात्म-त्वेन तयोर्यथा उत्तराधरभावः, एवं लोकयोरुत्तराधरभावो द्रष्टव्य इत्याह— "उत्तरो वा असावस्या इति । 'असौ' द्यौः । 'अस्याः' भूम्याः ॥ ९ ॥

* वा० सं० ११. २९, १ ।

† मन्त्रान्तर मिदम्, कर्मान्तरे विनियुक्तत्वात् (वा० सं० ११. २९.२.)।

अथैतयोः कृष्णाजिनपुष्करपर्णयोः युगपदभिमर्शनं विधत्ते— "अथैनेऽभिमृशतीति *। शक्यत्वादुभयोर्युगपदालम्भनम्। "सञ्ज्ञामिति। समानसञ्ज्ञम् 'एतत्' एतेन अभिमर्शनेन 'करोति' कृतवान् भवति। तत्र मन्त्रद्वयं विधत्ते— "शर्म च स्थ इति †। कृष्णाजिनपुष्करपर्णे सम्बोध्ये। 'शर्म' शरणं 'च' 'स्थ', युवयोरुपरि निधीयमानस्य मृत्पिण्डस्य 'शरणं' भवथ, 'वर्म' कवचं 'च' अस्य 'स्थ' भवथ। 'अच्छिद्रे' छिद्ररहिते 'बहुले' महापरिमाणे 'उभे' युवां 'व्यचस्वती' व्याप्तिमत्यौ भूत्वा 'संवसाथाम्' आच्छादयतां सदम्। संवसेराच्छादनार्थस्य ‡ रूपम्। 'पुरीष्यं' पशव्यम् 'अग्निम्' 'बिभृतम्'। भृञो लोटि बहुलवचनाद् द्विर्वचनाभावः। एतयोः शरणत्वकवचत्वम्। मृत्पिण्डमुद्दिश्य व्याचष्टे— "शर्म च स्थो वर्म चेति ॥ १० ॥

"संवसाथामिति §। 'समीची' समञ्चने, युवां कृष्णाजिनपुष्करपर्णे 'उरसा' हृदयेन विज्ञानेन, 'आत्मना' अवयवसंस्थानेन च 'संवसाथाम्' सञ्छादयताम् 'एनं' मृद्रूपमग्निम्। किमर्थम्? 'स्वर्विदा' स्वर्गलाभहेतोः 'अजस्रम्' अनुपक्षीणम् 'इत्' एव 'ज्योतिष्मन्तम्' तेजस्विनम् 'अग्निम्', 'अन्तः' युवयोर्मध्यप्रदेशे 'भरिष्यन्ती' धारयमाणे भवेतामिति शेषः ॥

द्वितीयमन्त्रस्योत्तरार्द्धं व्याचष्टे— "असौ वा आदित्य इति ॥ ११ ॥

---

* "अथैने अभिमृशतीति"—इति सायणभाष्यधृतपाठः।

† वा० सं० ११ अ०, ३१।

‡ अदा० आ० १३ धा०।

§ वा० सं० ११ ३१ क। ‖ वा० सं० ११, ३१ ख।

अभिमर्शनमन्त्रगतां द्वित्वसङ्ख्यां यजमानाग्निरूपेण प्रशं-
सति— "हाभ्या मिति, व्याख्यातम् * ॥ १२ ॥ २ [ ४. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥

---

(अथ द्वितीयं ब्राह्मणम् .)

अथ मृत्पिण्ड मभिमृशति । पुरीष्यो ऽसीति
पशव्यो ऽसीत्येतद्विश्वम्भरा इत्येष हीदꣳ सर्व्वं बिभ-
र्त्यथर्व्वा त्वा प्रथमो निरमन्थदग्न ऽइति प्राणो
वा ऽअथर्वा प्राणो वा ऽएत मग्रे निरमन्थत्तद्यो-
ऽसावग्रे ऽग्निरसृज्यत सोऽसीति तदाह त मेवैन
मेतत् करोति † ॥ १ ॥

अथैनं परिगृह्णाति ‡ । अभ्र्या च दक्षिणतो
हस्तेन च हस्तेनैवोत्तरतस्त्वा मग्ने पुष्कराद्ध्य-

---

* १६६ पृ० ३ पं० द्रष्टव्यमिति ।
† 'करोति'—इति ख । 'करोति'—इति ग ।
‡ 'परिमृशति'—इति क, ङ ।

थर्व्वा निरमन्थतेत्यापो वै पुष्करं प्राणो ऽथर्व्वा प्राणो वा ऽएत मग्रे ऽद्भ्यो निरमन्थन् मूर्ध्नो विश्वस्य वाघत इत्यस्य सर्व्वस्य मूर्ध्न इत्येतत् * ॥ २ ॥

त मु त्वा दध्यङ्ङृषिः । पुत्र ईधे ऽअथर्व्वण इति दध्यङ् वा ऽआथर्व्वणः स एनं तत ऐन्ध वृत्रहणं पुरन्दर मिति पाप्मा वै वृत्रः पाप्महनं पुरन्दर मित्येतत् † ॥ ३ ॥

त मु त्वा पाथ्यो वृषा । समीधे दस्यु-हन्तम मिति मनो वै पाथ्यो वृषा स एनं तत ऐन्ध धनञ्जयꣳ रणेरण ऽइति यथैव यजुस्तथा बन्धुः ॥ ४ ॥

गायत्रीभिः । प्राणो गायत्री प्राण मेवा-स्मिन्नेतद्दधाति तिसृभिस्त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधाति तासां नव पदानि नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति ॥ ५ ॥

---

* 'इत्येतत्'—इति ग, घ ।

† 'मित्येतत्'—इति ग, घ ।

थर्व्वा निरमन्थतेत्यापो वै पुष्करं प्राणो ऽथर्व्वा प्राणो वा ऽएत मग्रेऽद्भ्यो निरमन्थन् मूर्ध्नो विश्वस्य व्वाघत इत्यस्य सर्व्वस्य मूर्ध्न इत्येतत् * ॥ २ ॥

त मु त्वा दध्यङ्ङृषिः। पुत्र ईधे ऽअथर्व्वण इति व्वाग्वै दध्यङ्ङाथर्व्वणः स एनं तत ऐन्द्ध व्वृत्रहणं पुरन्दर मिति पाप्मा वै व्वृत्रः पाप्महनं पुरन्दर मित्येतत् † ॥ ३ ॥

त मु त्वा पाथ्यो व्वृषा। समीधे दस्यु-हन्तम मिति मनो वै पाथ्यो व्वृषा स एनं तत ऐन्द्ध धनञ्जयᳬ रणेरण ऽइति यथैव यजुस्तथा बन्धुः ॥ ४ ॥

गायत्रीभिः। प्राणो गायत्री प्राण मेवा-स्मिन्नेतद्दधाति तिसृभिस्त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधाति तासां नव पदानि नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति ॥ ५ ॥

---

* 'इत्येतत्'—इति ग, घ।

† 'मित्येतत्'—इति ग, घ।

अथैते त्रिष्टुभा ऽउत्तरे भवतः। आत्मा वै त्रिष्टुबात्मान मेवास्यैताभ्याᳪ संस्करोति सीद होतः स्व ऽउ लोके चिकित्वानित्ययमिवै होता तस्यैष स्वो लोको यत् कृष्णाजिनं चिकित्वानिति विद्वानित्येतत् सादया यज्ञᳪ सुकृतस्य योनाविति कृष्णाजिनं वै सुकृतस्य योनिर्देवावीर्देवान् हविषा यजासीति देवः सन् देवानवन् हविषा यजासीत्येतदग्ने वृहद्यजमाने वयो धा इति यजमानायाशिष माशास्ते ॥ ६ ॥

नि होता होतृषदने विदान इति। अग्निर्वै होता कृष्णाजिनᳪ होतृषदनं विदान इति विद्वानित्येतत्त्वेषो दीदिवाᳪ२॥ ऽअसदत् सुदक्ष इति त्वेषो दीप्यमानो ऽसदत् सुदक्ष इत्येतददब्धव्रतमतिर्वसिष्ठ इत्यदब्धव्रत ममतिर्ह्येष वसिष्ठः सहस्रम्भरः शुचिजिह्वो ऽअग्निरिति सर्व्वं वै सहस्रᳪ सर्व्वम्भरः शुचिजिह्वो ऽग्निरित्येतद् द्वाभ्या मारनेयोभ्यां त्रिष्टुब्भ्यां तस्योक्तो वन्धुः ॥ ७ ॥

अथैषा वृहत्युत्तमा भवति। वृहतीं वा ऽएष सञ्चितोऽभिसम्पद्यते यादृग्वै योनौ रेतः

सिच्यते तादृग् जायते तद्यदेतामत्र बृहतीं करोति तस्मादेष सञ्चितो बृहतीमभिसम्पद्यते ॥ ८ ॥

सᳬसीदस्व महाँ२॥ ऽअसीति । इदमेवैतद्रेतः सिक्तᳬ सᳬसादयति तस्माद्योनौ रेतः सिक्तᳬ सᳬसीदति शोचस्व देववीतम इति दीद्यस्व देववीतम इत्येतद्वि धूममग्ने ऽअरुषं मियेध्य सृज प्रशस्त दर्शतमिति यदा वा ऽएष समिध्यते ऽथैष धूममरुषं विसृजते दर्शतमिति दृश ऽइव ह्येषः * ॥ ९ ॥

ताः षट् सम्पद्यन्ते । षडृतवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत् तद् भवति यद्वेव संवत्सरमभिसम्पद्यते तद् बृहतीमभिसम्पद्यते बृहती हि संवत्सरो द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्यास्तत् षट्-त्रिᳬशत् षट्त्रिᳬशदक्षरा बृहती तं दक्षिणत उदञ्चमाहरति दक्षिणतो वा † ऽउदग्योनौ रेतः

* 'ह्येषः'—इति ग, ह्येषः—इति घ ।

† 'वा'—इति क ।

तृतीयामृचं विधत्ते— "त मु त्वा पाथ्य इति *। पाथोऽन्नम्, तत्कार्यत्वात् तत्र भवः 'पाथ्यः'। "पाथोनदीभ्यां ड्यण्" †। बलम्। सर्वेन्द्रियानुग्राहकः। 'पाथ्यो वृषा'—इति मन उच्यते; "मनो वै पाथ्यो वृषा"—इति श्रुतौ ‡ व्याख्यानात्। 'दस्युहन्तमम्' शत्रूणामतिशयेन हन्तारम्, 'रणे' सङ्ग्रामे 'धनञ्जयं' धनस्य जेतारं 'त्वा' त्वां 'समीधे'। तृतीयपादो विस्पष्टार्थत्वात् व्याख्यातुं नार्हतीत्याह— "यथैव यजुः, तथैव बन्धुरिति ॥ ४ ॥

उक्तानां तिसृणामृचां गायत्रीछन्दस्त्वमनूद्य प्रशंसति— "गायत्रीभिः प्राण इति। गायत्र्याः प्राणरूपत्वं श्रुतम्। मन्त्रगतत्रित्वसङ्ख्यां प्राणोदानव्यानात्मना प्रशंसति— "तिसृभिस्त्रयो वै प्राणा इति। एकैकस्या गायत्र्या ऋचः त्रयस्त्रयः पादाः। तासां नव पादान् सम्भूय नवप्राणात्मना प्रशंसति— "तासां नव पदानि, नव वै प्राणा इति। एतेन मन्त्रत्रयेण मृत्पिण्डस्य परिग्रहे तस्यां हृदि प्राणानेव संहितवान् भवतीत्यर्थः ॥ ५ ॥

धारणमन्त्रेषु त्रिष्टुभावित्युक्तम्, तौ विधातुं तद्गतं छन्दः प्रशंसति— "अथैतस्त्रिष्टुभाऽवसरे भवत इति। त्रिष्टुभ आत्मरूपत्वं प्रागुक्तम्, ताभ्यां मन्त्राभ्यां धारणेन मृत्पिण्डस्यात्मानं स्वरूपमेव संस्कृतवान् भवति ॥

---

* वा० सं० ११ ३४।

† पा० सू० ४ ४. ११।

‡ इतेव २११ पृ० ९ पं० द्रष्टव्यम्।

त्रिष्टुभौ विधत्ते— "सीद होतरिति *। हे 'होतः' देवानां माह्वातः! मृद्गपात्रे! 'स्वे' स्वकीये कृष्णाजिने 'सीद' निषीद। 'चिकित्वान्' विद्वान्, अस्मदीयं कर्म जानन्, तथा 'सुकृतस्य' सुष्टु क्रियमाणस्य कर्मणो 'योनौ' स्थाने 'यज्ञ' 'सादय'। कृष्णाजिने विस्तीर्यमाणे ग्रीवा मध्यात: मेपणं सोमनिधानादिकञ्च भवतीति 'देवावीः'। "पवितृस्तृतन्निभ्यः:" †। देवान् त्वं सपर्यन् 'हविषा' 'यजन्' 'यजासि' यजसे: पञ्चमे लकारे रूपम्। हे 'अग्ने!' 'यजमाने' 'बृहत्' प्रभूतं 'वयः' धनं 'धाः' देहि ॥ ६ ॥

"निहोतेति ‡। मन्त्रं प्रतिपाद्य मनूद्य व्याचष्टे— "अग्नि॰ र्वै होतेति। निहोतेति 'नि'-इत्युपसर्गः 'असदत्'-इति क्रियया सम्बध्यते, निषीदति। 'होता' आह्वाता योऽग्निः, 'होतृ-सदने' अग्नेः सदने कृष्णाजिने 'विदानः' कर्म जानन्, 'त्विषः' "त्विष दीप्तौ" §, दीप्यमानः, 'दीदिवान्', 'सुदक्षः' सुबलः, साधु क्षिप्रकारी वा 'अदब्धव्रतप्रमतिः' अनुपहतकर्मविषय-प्रकृष्टमतिः, 'वसिष्ठः' वसुमत्तरः, 'सहस्रम्भरः' सर्वस्य भर्ता, यद्वा "हृग्रहोर्भः" ‖ सहस्रधा विक्रियमाणः। तथा चैतातान्रेयक (?) ब्राह्मणम्— "एष ह वा अस्य सहस्रं भरता यदेनं नैकं सन्तं बहुधा विहरन्ति"-इति।

* वा० सं० ११. ३५।

† उ० ३ पा० १५८ सू०।

‡ वा० सं० ११. ३५।

§ भ्वा० उ० १००२ धा०।

‖ पा० ८. २. ३२ सू० १ वा०।

सिच्यत ऽएषो ऽग्नेस्तर्हि योनिरविच्छेद माहरति रेतसोऽविच्छेदाय ॥ १० ॥ ३ ॥

॥ इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् [४. २.] ॥

कात्यायनः— "पिण्डं पुरीष्योऽसीति, पाणिभ्यां परिगृह्णात्येनं दक्षिणोत्तराभ्यां दक्षिणः साभ्रिस्त्वामग्न इति षड्भिः सर्वां मृदं हृत्वा, पुष्करपर्णे निदधाति"–इति *। "त्वामग्ने"–इत्यादिभिः षड्भिः ऋग्भिः † यावदपेक्षितां मृदं 'सर्वां' 'मृदम्' एकवारमेव गृहीत्वा 'पुष्करपर्णे' निदध्यादिति। तदिदं द्वितीयम्। प्रथमतो 'मृत्पिण्डं' "पुरीष्योऽसि"–इति मन्त्रेण ‡ आलभते, 'अथ' दक्षिणोत्तराभ्यां 'पाणिभ्याम्' 'एनं' 'परिगृह्णाति'। तत्र 'दक्षिणः' हस्तः 'साभ्रिः' अभ्रिसहितः, वामस्तु केवलः। अथ तद् ब्राह्मणेन विधीयते— "अथ मृत्पिण्डमिति।

मृत्पिण्डाभिमर्शनमन्त्रस्यायमर्थः।— हे 'अग्ने!' त्वम् 'पुरीष्यः' पशुहितः 'असि', 'विश्वभराः' भूलोकस्य सर्वस्य धारकश्च; चीयमानाग्नेर्विराड्रूपत्वात्। 'अथर्वा' अरणवान्, प्राणः 'प्रथमः' पूर्वः त्वां 'निरमन्थत्' निर्मथितवान्। पुरीष्योऽसीति सिद्धवत्कथनेन यदुक्तम्, तदुपपादयति—"पशव्योऽसीति"। "प्राणो वा अथर्वा"–इत्यर्थवादोऽस्य सिद्धवदर्थकथनम्। "तद्

* का० श्रौ० सू० १६ २ २६, २७, ३. १।

† वा० सं० ११. ३२ २—७।

‡ वा० सं० ११. ३२, १।

योऽसौ, यत्रेऽग्निरसृज्यत, सोऽसीतीति। पूर्वं योऽग्निः सृष्टः, त मेतं पुरीष्योऽसीत्यनेनोक्तवान् भवतीत्यर्थः ॥ १ ॥

"अथैन मिति। 'परिगृह्णाति' मृत्पिण्डं धारयन् प्राङ्मुखस्याध्वर्योः 'दक्षिणतः' प्रदेशे वर्त्तमानः, दक्षिणो हस्तः साभ्रिः, उत्तरतः केवलः, ताभ्यां पाणिभ्यां धारयेत्।

ग्रहणमन्त्रान् विधत्ते— "त्वा मग्ने पुष्करादधि"-इत्यारभ्य *, "ताः षट् सम्पद्यन्ते"-इत्यतः † प्राक्तनेन। तत्राद्यास्तिस्रो गायत्रः, त्रिष्टुभौ द्वे, षष्ठी बृहती।

"त्वा मग्ने"-इत्यस्याय मर्थः। हे 'अग्ने।' 'त्वाम्' 'अथर्वा' अरणशील: प्राणः, 'पुष्करात्' उदकात्, 'अधि'-शब्दः पञ्चम्यर्थानुवादी, 'निरमन्थत'। अग्निं विशिनष्टि— "विश्वस्य वाघत इतीति। 'मूर्द्ध्नः' मूर्द्धानम्। कर्म्मणि षष्ठी॥

पुष्करायर्वपदयोरर्थ माह—"आपो वै पुष्करं प्राणोऽथर्वेति ॥ २ ॥

द्वितीयां मन्त्रं विधत्ते— "त मु त्वा दध्यङ्ङिति ‡। 'अथर्वणः पुत्रः' 'दध्यङ्' नाम ऋषिः 'वृत्रहणं' वृत्रस्य पापमनः हन्तारम्, 'पुरन्दरं' असुरपुराणां दारयितारं 'त्वाम्' एव 'ईधे' दीपयति। "ञि इन्धी दीप्तौ" §, लिटि "इन्धिभवतिभ्याञ्च"—इति ‖ कित्वान्नलोपः। "दध्यङ्ङाथर्वण इति। सम्प्रसारणात् वाक्क्लेश श्रुतिः ॥ ३ ॥

---

* वा० सं० ११. ३२. २।
† २१३ पृ० १० पंक्तिर्द्रष्टव्या।
‡ वा० सं० ११. ३३।
§ ध० धा० १० धा०।
‖ पा० सू० १. २. ६।

तृतीयां ऋचं विधत्ते— "त मु त्वा पाथ्य इति * । पाथोऽन्नम्, तत्कार्यत्वात् तत्र भवः 'पाथ्यः'। "पाथोनदीभ्यां ड्यण्" † । बलम् । सर्वेन्द्रियानुग्राहकः । 'पाथ्यो वृषा'—इति मन उच्यते; "मनो वै पाथ्यो वृषा"—इति श्रुतौ ‡ व्याख्यानात् । 'दस्युहन्तमम्' शत्रूणां अतिशयेन हन्तारम्, 'रणे' सङ्ग्रामे 'धनञ्जयं' धनस्य जेतारं 'त्वा' त्वां 'समीधे'। तृतीयपादो विस्पष्टार्थत्वात् व्याख्यातुं नार्हतीत्याह— "यथैव यजुः, तथैव बन्धुरिति ॥ ४ ॥

उक्तानां तिसृणां ऋचां गायत्रीच्छन्दस्त्वं समूह्य प्रशंसति— "गायत्रीभिः प्राण इति। गायत्र्याः प्राणरूपत्वं युक्तम्। मन्त्रगतत्रित्वसङ्ख्यां प्राणोदानव्यानात्मना प्रशंसति— "तिसृभिस्त्रयो वै प्राणा इति। एकैकस्या गायत्र्या ऋचः त्रयस्त्रयः पादाः। तासां नव पादान् सम्भूय नवप्राणात्मना प्रशंसति— "तासां नव पदानि, नव वै प्राणा इति। एतेन मन्त्रत्रयेण मृत्पिण्डस्य परिग्रहे तस्यां मृदि प्राणानेव संहितवान् भवतीत्यर्थः ॥ ५ ॥

धारणमन्त्रेषु त्रिष्टुभावित्युक्तम्, तौ विधातुं तद्गतं छन्दः प्रशंसति— "अथैतत्त्रिष्टुभाऽउत्तरे भवत इति। त्रिष्टुभ आत्मरूपत्वं प्रागुक्तम्, ताभ्यां मन्त्राभ्यां धारणेन मृत्पिण्डस्यात्मानं स्वरूपमेव संस्कृतवान् भवति ॥

---

* मा० सं ११. ३४ ।

† पा० सू० ४ ४ १११ ।

‡ द्रष्टव्य २११ पृ० ८ पं० द्रष्टव्यम् ।

त्रिष्टुभौ विधत्ते— "सीद होतरिति *। हे 'होतः' देवानां साह्वानः! मद्रूपाग्ने! 'स्वे' स्वकीये कृष्णाजिने 'सीद' निषीद। 'चिकित्वान्' विद्वान्, यज्ञदीयं कर्म जानन्, तथा 'सुकृतस्य' सुष्टु क्रियमाणस्य कर्मणो 'योनौ' स्थाने 'यज्ञ' 'सादय'। कृष्णाजिने विस्तीर्यमाणे ग्रीवा मवधातः पेषणं सोमनिधानादिकञ्च भवतीति 'देवावीः'। "अवितृस्तृतमिश्र ईः" †। देवान् त्वं तर्पयन् 'हविषा' 'यजन्' 'यजासि' यजतेः पञ्चमे लकारे रूपम्। हे 'अग्ने!' 'यजमाने' 'बृहत्' प्रभूतं 'वयः' अन्नं 'धाः' देहि॥ ६॥

"निहोतेति ‡। मन्त्रं प्रतिपाद्य समुद्य व्याचष्टे— "अग्निर्वै होतेति। निहोतेति 'नि'–इत्युपसर्गः 'असदद्'–इति क्रियया सम्बध्यते, निषीदति। 'होता' आह्वाता योऽग्निः, 'होतृषदने' अग्नेः सदने कृष्णाजिने 'विदानः' कर्म जानन्, 'त्वेषः' "त्विष दीप्तौ" §, दीप्यमानः, 'दीदिवान्', 'सुदक्षः' सुबलः, साधु क्षिप्रकारी वा 'अदब्धव्रतप्रमतिः' अनुपहतकर्मविषयप्रज्ञाष्टमतिः, 'वसिष्ठः' वसुमत्तरः, 'सहस्रम्भरः' सर्वस्य भर्ता, यद्वा "छन्दसोर्भः" ‖ सहस्रधा विक्रियमाणः। तथा चैतातामृरेयक (?) ब्राह्मणम्— "एष ह वा अस्य सहस्रं भरता यदेष सैकं सन्तं बहुधा विहरन्ति"–इति।

---

* वा० मं० ११. ३५।

† उ० ६ पा० १५८ सू०।

‡ वा० सं ११. ३५।

§ भ्वा० उ० १००१ धा०।

‖ पा० ८. २. ३२ सू० १ वा०।

अनयोर्मध्ये द्वित्वसङ्ख्याऽऽग्नेयत्रिष्टुप्प्रस्तावकं ब्राह्मणमति-दिशति— "तस्योक्तो बन्धुरिति। "आ त्वा जिघर्मीत्येताभ्यां व्यतिषक्ताभ्यां साहुतिद्वयं कार्यमित्यस्य प्रकरणे "द्विपाद्यजमान इत्यादिना * ॥ ७ ॥

षष्ठीं ऋचं विधातुं तद्गतं बृहतीच्छन्दः प्रशंसति— "अथैषा बृहतीति। 'एषा' वक्ष्यमाणा। "बृहतीं वा एष इति। 'सञ्चितः अग्निः बृहतीम् अभिसम्पद्यते' सम्पत्त्यक्षरसङ्ख्याको भवति; 'अथाप्युत्तरत्र बृहतीसम्पत्तिराम्नास्यते †। सामान्येनायं सम्पत्तिप्रकारः;— संवत्सररूपोऽग्निरिति प्रागुक्तम् ‡, तत्र संवत्सरे द्वादश पौर्णमास्यः, द्वादश कृष्णाष्टम्यः, द्वादशामावास्याः, ताः षट्त्रिंशत् संवत्सरे धार्यमाणेऽग्नौ सम्पद्यन्ते, बृहत्यपि षट्त्रिंशदक्षरेति तत्साम्यम्।

एवन्तर्हि अग्निचयनकर्मान्ते सम्पत्तिर्वक्तव्येति चेत्, तत्राह— "यादृग्वै योनाविति। 'योनौ यादृग् रेतः सिच्यते', 'तादृग्' एवोत्तरं 'जायते'। अत इदानीं बीजभूतमद्रूपाग्नेः बृहत्या धारणे बृहत्यात्मकत्वमेव तस्य सम्पादितवान् भवति ॥ ८ ॥

तामृचं विधत्ते— "संसीदस्व महानिति। हे 'अग्ने।' मद्रूप! 'संसीदस्व' सम्यग् बीजात्मनावतिष्ठस्व, यतो 'महान्' त्वम् 'असि'। 'देववीतमः' अतिशयेन हविषा देवानां तर्पयितृतमः, त्वं 'शोचस्व' दीप्यस्व। हे 'मियेध्य' मेधो यज्ञ-

* पुरस्तात् (३ ए० १ ब्रा० १९—२१ क०) द्रष्टव्यम्।
† अनुपदमेव दशमकण्डिकायां (२१९, २१९ पृ०) द्रष्टव्यम्।
‡ वा० सं० ११. ३७।

स्तादर्हतीति हे 'प्रशस्त' प्रकर्षेण स्तुत ! अग्ने ! 'दर्शतम्' दर्शनीयम्, 'अरुषम्' आरोचमानं धूमं 'विसृज' ॥

मन्त्रं व्याचष्टे— "इद मेवैतदिति। उत्पत्स्यमानाग्ने रेतोरूपत्वात् मृत्पिण्डस्य बाहुभ्यां धारणं नाम; योनौ सिक्तस्य रेतसः संसादन मित्यर्थः। 'धूमं विसृज'–इति यदुक्तम्, तदुपपादयति— "यदा वा एष समिध्यत इति ॥ ९ ॥

परिग्रहणे विनियुक्तानां मन्त्राणां सङ्ख्यां सम्भूय संवत्सरात्मना प्रशंसति— "ताः षट् सम्पद्यन्त इति। प्रकारान्तरेण स्तोतु मनुवदति— "षडेव संवत्सर मिति। संवत्सरे तावद् द्वादश पौर्णमास्यः, द्वादशाष्टकाः, द्वादशामावास्याः; षट्त्रिंशत्सङ्ख्या सम्पद्यते, बृहत्या अपि षट्त्रिंशदक्षरत्वात् संवत्सरसम्मितोऽग्निः बृहत्यात्मना सम्पद्यत इत्यर्थः।

विधत्ते— "तं दक्षिणत उदञ्च मिति। 'तं' मृत्पिण्डं 'दक्षिणतः' प्रदेशात् 'उदञ्चं' उदङ्मुखम् आहरेत्। तत् प्रशंसति— "दक्षिणतो वा इति। यतो लोके दक्षिणतः स्थितेन पुरुषेण, वामविभागे स्थितया स्त्रिया "योनौ रेतः सिच्यते'; 'एतर्हि' इदानीं अग्नौ धार्यमाणस्याग्नेः एषः मृत्पिण्डो 'योनिः' 'अविच्छेदं' विच्छेदराहित्येन मृत्पिण्डाहरणं कर्त्तव्यम्; 'रेतसः' रेतोभूतस्याग्नेः 'अविच्छेदाय' इति ॥ १० ॥ २ [ ४. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् । )

अथ तत्राप उपनिनयति । यद्वा ऽअस्यै क्षतं यद्विलिष्टमद्भिर्वै तत् सन्धीयते ऽद्भिरेवास्या ऽएतत् क्षतं व्विलिष्टꣳ सन्तनोति सन्दधाति ॥ १ ॥

आपो देवीरुपसृज । मधुमतीरयक्ष्माय प्रजाभ्य इति रसो वै मधु रसवतीरयक्ष्मत्वाय प्रजाभ्य इत्येतत्तासामास्थानादुज्जिहतामोषधयः सुपिप्पला इत्येषा वा ऽआस्थानादुज्जिहत ऽओषधयः सुपिप्पलाः * ॥ २ ॥

अथैनां व्वायुना सन्दधाति । यद्वा ऽअस्यै क्षतं यद्विलिष्टं व्वायुना वै तत् सन्धीयते व्वायुनैवास्या एतत् क्षतं व्विलिष्टꣳ सन्तनोति सन्दधाति ॥ ३ ॥

सन्ते व्वायुर्मातरिश्वा दधात्विति । अयं वै व्वायुर्मातरिश्वा योऽयं पवत ऽउत्तानाया हृदयं यद्विकस्तमित्युत्तानाया ह्यस्या एतद्धृदयं व्विकस्तं यो देवानां चरसि प्राणथेनेत्येष हि सर्व्वेषां देवानां चरति प्राणथेन कस्मै देव व्वषडस्तु तुभ्य

---

* 'सुपिप्पला,'—इति ग, घ ।

सर्वं स्थलम् 'अद्भिः' 'सन्धीयते' जलसन्धाने हि विषमं स्थलं समं भवति । तस्मादापः कुण्डे निधेयाः ॥ १ ॥

मन्त्रं विधत्ते—"आपो देवीरिति * । अत्राग्निः सन्धीयते । 'प्रजाभ्यः' प्रजानाम् 'अयक्ष्माय' यक्ष्माव्याधिः तदभावाय, 'मधुमतीः' रसवतीः 'देवीः' द्योतमानाः 'अपः' 'उदसृजन्' आसिञ्चत । आसां भूमिगतानां अपाम् 'आस्थानात्' उदकसंसृष्टभूदेशात् 'सुपिप्पलाः' पिप्पलं पक्वं फलम्, सुफलाः, 'ओषधयः' फलपाकान्ताः व्रीह्यादयः 'उत्तिष्ठत' उद्गच्छन्तु, रोहन्तु । "ओ हाङ् गतौ" † ।

'अयक्ष्माय'-इति पदं भावत्वेन व्याचष्टे— "अयक्ष्मत्वायेति ॥ २ ॥

अत्र सूत्रम्—"सन्त इति वा त मवधिपतीति ‡ । "सन्ते-वायुर्मातरिश्वा"-इति मन्त्रेण § वायु मवधिपेत्, मन्त्रपाठेनाघटे वायुं पूरयेत् । तदिदं विधत्ते—"अथैनां वायुना सन्दधातीति । 'एनां' खननभूमिम् । इदानीं सुप्तः (?) यद्वा अच्छे अत भिति । यथा लोके गर्तं खात्वं निम्नस्थलं वायुना सन्धीयते । वायुसञ्चालितैः पर्णादिकण्टकादिकं पूर्यते, एवमत्रापीति मन्तव्यम् ॥ ३ ॥

मन्त्रं विधत्ते—"सन्ते वायुरिति । पूर्वोऽर्धर्चः, पृथिवीदेवत्यः, उत्तरो वायव्यः । 'उत्तानायाः' ऊर्ध्वमुखतया विस्तृ-

साया: 'ते' तव पृथिव्या: 'यत्' 'हृदयं' 'विकस्तम्' अवटकारणेन खातम्, तत् 'मातरिश्वा' मातरि अन्तरिक्षे श्वसिति पवते इति 'मातरिश्वा' वायु:, 'सन्दधातु' सम्पूरयतु। उत्तरार्द्धे वायु' सम्बोध्योच्यते। 'य:' च त्वं 'देवानाम्' अग्न्यादीनां वागादिदेवानां वा 'प्राणथेन' प्राणत्वेन 'चरसि'। वायौ सति वागादीन्द्रियाणि चेष्टन्ते। हे 'देव' द्योतमान वायो! 'कस्मै' क: प्रजापति:, तद्रूपाय 'तुभ्यं' 'वषट्' अस्तु। इयं पृथिवी वषड्भूता भवतु। 'क'-पदस्यार्थ माह— "प्रजापतिर्वै क:"-इति। वषट्कारणेनाहुति: कार्येति ज्ञात्वा प्रशंसति— "नो हैताप्यन्याहुतिरिति। 'यथा' 'एषा' आहुति: सन्धानकारी, एवमन्या नास्तीत्यर्थ: ॥ ४ ॥

कात्यायन:— "अनामिकया संवपति पुरस्तात् पश्चाद् दक्षिणत उत्तरतश्च"-इति *। अनामिकाङ्गुल्या अवटस्य पुरस्तात् प्राच्या दिश: सकाशात् 'पांसु' अवटे संवपेत्। एवं प्रत्यगादिभ्य: सकाशात् तद् विधत्ते— "अथैनां दिग्भि: सन्दधातीति। तत्र क्रमं विधत्ते— "स इमां चेमां च दिशौ सन्दधातीति। 'इमा मिमाम्' इत्यभिनयेन प्राक्प्रतीच्यौ दिशौ विवक्ष्येते। एतयोर्विवक्षायां कारण माह— 'एते दिशौ' 'संहिते'। इम मिति लोकप्रसिद्धे प्राक्प्रतीच्याविति युज्येते, पुन: इमाञ्च'-इत्यनेन दक्षिणोदीच्यौ दिशौ विवक्ष्येते। अत्रापि संहितत्व मेव कारणम्। अथ चतुर्दिग्गं सन्धानप्रकार मभिनयेन दर्शयति— "इत्यथेत्थेति। 'इति' एवम् 'अथ' प्रथमं प्राचीं दिश मित्यर्थ:। इतरदिक्क्रियापेक्षया 'अथेति'-पदत्रयम्।

* का० श्रौ० सू० १६ २ ४।

खातं स्थानम् 'अद्भिः' 'सन्धीयते' जलसन्धाने हि विषमं स्थलं समं भवति । तस्मादापः कुण्डे निषेयाः ॥ १ ॥

मन्त्रं विधत्ते—"अपो देवीरिति * । अत्राग्निः सम्बोध्यते । 'प्रजाभ्यः' प्रजानाम् 'अयक्ष्माय' यक्ष्माव्याधिः तदभावाय, 'मधुमतीः' रसवतीः 'देवीः' द्योतमानाः 'अपः' 'उदसृजन्' आसिञ्चत । आसां भूमिगतानां अपाम् 'आस्थानात्' उदकसंसृष्टभूदेशात् 'सुपिप्पलाः' पिप्पलं पक्वं फलम्, सुफलाः, 'ओषधयः' फलपाकान्ताः शस्यादयः 'उज्जिहत' उद्गच्छन्तु, रोहन्तु । "ओ हाङ् गतौ" † ।

'अयक्ष्माय'-इति पदं भावत्वेन व्याचष्टे— "अयक्ष्मतायेति ॥ २ ॥

अथ सूत्रम्— "सं त इति वा स सञ्चिपतीति ‡ । "सं ते वायुर्मातरिश्वा"-इति मन्त्रेण § वायु समक्षिपेत्, मन्त्रपाठेनावटे वायुं पूरयेत् । तदिदं विधत्ते— "अथैनां वायुना सन्दधातीति । 'एनां' खननभूमिम् । इदानीं सुमः ( ? ) यद्वा अस्मै अत मिति । यथा लोके गर्तं श्वभ्रं निम्नस्थलं वायुना सन्धीयते । वायुप्रचालितैः पर्णादि कण्टकादिकं पूर्यते, एवमत्रापीति मन्तव्यम् ॥ ३ ॥

मन्त्रं विधत्ते— "अग्ने वायुरिति । पूर्वोऽर्द्धर्चः, पृथिवीदेवत्यः, उत्तरो वायव्यः । 'उत्तानायाः' ऊर्ध्वमुखतया विस्तृ-

* वा० सं० ११. ३८. १ ।
† जु० आ० ६ धा० ।
‡ का० श्रौ० सू० १६. ३. ३ ।
§ वा० सं० ११. ३९ ।

स्थायाः 'ते' तव पृथिव्याः 'यत्' 'हृदयं' 'विस्रस्तम्' अवट-करणेन व्यस्तम्, तत् 'मातरिश्वा' मातरि अन्तरिक्षे श्वसिति चरति इति 'मातरिश्वा' वायुः, 'सन्दधातु' सम्पूरयतु। उत्त-रार्द्धं वायुं सम्बोध्योच्यते। 'यः' च त्वं 'देवानाम्' अग्न्यादीनां वागादिदेवानां वा 'प्राणथेन' प्राणत्वेन 'चरसि'। वायौ सति वागादीन्द्रियाणि चेष्टन्ते। हे 'देव' द्योतमान वायो! 'कस्मै' कः प्रजापतिः, तद्रूपाय 'तुभ्यं' 'वषट् अस्तु'। इयं पृथिवी वषड्भूता भवतु। 'क'-पदस्यार्थं आह— "प्रजापतिर्वै कः"— इति। वषट्कारेणाहुतिः कार्येति मत्वा प्रशंसति— "सो ह्येता-मत्यन्याहुतिरिति। 'यथा' 'एषा' आहुतिः सन्धानकरी, एवं अन्या नास्तीत्यर्थः ॥ ४ ॥

कात्यायनः— "अनामिकया संवपति पुरस्तात् पश्चाद् दक्षिणत उत्तरतश्च"-इति *। अनामिकाङ्गुल्या अवटस्य पुरस्तात् प्राच्या दिशः सकाशात् 'पांसू' अवटे संवपेत्। एवं प्रत्यगा-दिभ्यः सकाशात् तद् विधत्ते— "अथैनां दिग्भिः सन्दधा-तीति। तत्र क्रमं विधत्ते— "स इमां चेमां च दिशौ सन्द-धातीति। 'इमां चेमाम्' इत्यभिनयेन प्राक्प्रतीच्यौ दिशौ विवक्ष्येते। एतयोर्विवक्षायां कारणं आह— 'एते दिशौ' 'सं-हिते'। इमे इति लोकप्रसिद्धे प्राक्प्रतीच्याविति बुध्येते, पुनः 'इमाश्च'-इत्यनेन दक्षिणोदीच्यौ दिशौ विवक्ष्येते। अत्रापि संहितत्व मेव कारणम्। अथ चतुर्द्दिशं सन्धानप्रकार मभि-नयेन दर्शयति— "इत्यग्रेऽथेति। 'इति' एवम् 'अग्रे' प्रथमं प्राचीं दिश मित्यर्थः। इतरदिक्क्रियापेक्षया 'अथेति'-पदत्रयम्।

---

* का॰ श्रौ॰ सू॰ १६ २ ४।

पूर्वं सप्तरात्रभाजान् पशून् प्रमुच्य, ते मौञ्जीभिरभिधानीभिरभिहिता भवन्तीत्यादिना, विमुक्तो भवन्तीत्यनेन च रशनाविधानं मुक्तम् *, अथ योक्त्रस्य समन्तं वेष्टनं विधत्ते— "तत् पर्यस्यति वास इति †। 'तत्' योक्त्रं 'पर्यस्यति' परिवेष्टयति। हे 'विभावसो' दीप्तिभिर्निवसित:!, दीप्तिधन! वा, हे 'अग्ने!' 'चित्ररूप' विचित्ररूपं 'वासः' 'संव्ययस्व'। "व्येञ् संवरणे" ‡, परिधत्स्व। योक्त्रमग्नये वासः संव्ययस्वेति वस्त्रपरिधापनोक्तिस्तात्पर्यमाह— "वरुण्या वै यज्ञ इति। 'यज्ञो' हि रज्जुः 'वरुण्या' वरुणदेवत्या भवति §। यथा— योक्त्रपरित्यागे "प्रत्या मुञ्चामि वरुणस्य पाशात्"-इति ‖। सत्यः, नैवम्; इह तु 'एतद्' योक्त्रम् 'अवरुण्यं कृत्वा' 'यथा वासः परिधापयेत्' 'एवं' तदित्यभिप्रायेण "वासः •—• संव्ययस्वेत्युक्तम् ¶। पाशस्यैव हि वरुणो देवता, न वाससः इत्यर्थः ॥ ८ ॥

विधत्ते— "अथैनं आदायोत्तिष्ठतीति **। 'एनं' मृत्पिण्डम् आदाय उत्तिष्ठेत्। तत् प्रशंसति— "असौ वा आदित्य इति। "त्रेधात्मानं विकरोति,— अग्निं तृतीयं, वायुं तृतीयम्, आदित्यं तृतीयम्"-इति श्रुतेः ††। मृत्पिण्डोऽग्निरिति बोध्यम्। तदादायोत्थानेन अमुम् आदित्यमेवोत्थापितवान् भवतीति ॥

* २ प्र० ६ ब्रा० २६, २७ क० ( १९८ पृ० ) द्रष्टव्यम्।

† का० श्रौ० सू० १६। २ । ६ सू।

‡ धा० पा० १००७ धा०।

§ १ भा० २ प्र० ४ ब्रा० १२ कण्डिकायां द्रष्टव्यम्।

‖ ऋ० सं० ८ अष्ट० ६ अ० २४ व० द्रष्टव्यम्।

¶ वा० सं० ११ अ० ४०।

** का० श्रौ० सू० १६ । ३ । ७। †† तै० आ० १. ७, १. २।

मन्त्रं विधत्ते—"उदु तिष्ठ स्वध्वरेतीति *। हे 'स्वध्वर' सुयज्ञ ! 'उत्तिष्ठ'। 'उ'-शब्दोऽप्यर्थः। अपि च 'दिव्या' देवसम्बन्धिन्या 'धिया' बुद्धया 'नः' अस्मान् 'अव' पालय। 'दृशे' दर्शनाय 'महता भासा' प्रौढेन तेजसा 'सुशुक्वनिः' अत्यन्तं दीप्यमानः 'सुशस्तिभिः' शोभनशंसितैः 'वोढृभिः' अश्वैः 'आयाहि' आगच्छ 'अग्ने' सद्गुरुः इति। सुशस्तिभिरितिपदस्यार्थं माह—"ये वोढारस्ते सुशस्तय इति ॥ ८ ॥

अत्र सूत्रम्,— "ऊर्ध्वबाहुः प्राञ्चं प्रगृह्णाति, ऊर्ध्व ऊ षु ण इति, अवहृत्योपरि नाभिधारयन्निति †। तदूर्ध्वधारणं विधत्ते— "अथैन मित ऊर्ध्वं मिति। 'इतः' भूमेः सकाशात् 'ऊर्ध्वं' प्राङ्मुखं प्रगृह्णीयात्। "असौ वा आदित्य इत्यादि पूर्ववद्व्याख्येयम् ‡।

मन्त्रं विधत्ते— "ऊर्ध्व ऊ षु ण इति §। 'नः' अस्माकम् 'ऊतये' तर्पणाय सुष्ठु 'ऊर्ध्वः' 'तिष्ठ'। तत्रोपमा माह— "देव इति। 'न'-शब्द उपमार्थः। यथा सविता देवः 'वाजस्य' अन्नस्य 'सनिता' सम्भक्ता 'ऊर्ध्वं' तिष्ठति। 'यद्' यस्मात् 'अञ्जिभिः' अभिव्यञ्जकैः 'वाघद्भिः' ऋत्विग्भिः उपलक्षितं त्वा 'विह्वयामहे' बहुविधं माह्वयामः।

अत्र मन्त्रे पूर्वार्द्धं निगदव्याख्यात मिति दर्शयति— "यथैव यजुः, तथा बन्धुरिति। उत्तरार्द्धं 'वाजस्य'–इत्यादेः

* वा० सं० ११. ४१।
† का० श्रौ० सू० १६ ३. ८, ९ क।
‡ पूर्वत्र (२२७ पृ० १४ पं०) द्रष्टव्यम्।
§ वा० सं० ११. ४२।

स्थैर्यं माह— "उर्वी वा एष तिष्ठत्वित्यादिना। पूर्वं मित्र कर्म मिति सामान्येनोक्तम्, तद् विशिनष्टि— "पयोशाद् प्रगृह्णातीति। बाह्वोः परस्तात् यदूर्ध्वौ बाहुः, प्रात्त मित्युद्गृह्णीत।

अग्निपिण्डस्याधो नयनं विधत्ते— "प्रयेण सुआवहरतीति। उपावहरणस्य प्रवधिं दर्शयति— "स सुपावहृत्येति। उपरि-नाभिधारणस्य प्रतापकं ब्राह्मणं मित्यतिदिशति— "तस्योपरि नाभ्युरिति। कृत्स्नधारणप्रस्तावे "यदेवोपरि नाभि तस्मात् ये नाभे रेतः प्रजातिरिति * •—• एतद्वै पशोर्मेध्यतरं यदुपरि-नाभि"—इति † ॥ १० ॥ ४ [ ४. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥

---

( अथ चतुर्थं ब्राह्मणम्. )

इह ऽएव भवन्त्विति पशूनभिमन्त्रयते। एतद्वा ऽएषु देवाः सम्भरिष्यन्तः पुरस्ताद्वीर्यं समदधुस्तथैवैष्वेतत् सम्भरिष्यन् पुरस्ताद्वीर्यं दधाति ॥ १ ॥

सो ऽश्व मभिमन्त्रयते। स जातो गर्भो ऽअसि

---

*, † उपरिष्टात् ( ५ प्र० १ ब्रा० ८,१० क० ) द्रष्टव्यम्।

रोदस्योरितीमे वै द्यावापृथिवी रोदसी तयो-रेष जातो गर्भोऽग्ने चारुर्व्विभृत ओषधीष्विति सर्व्वासु ह्येष चारुर्व्विभृत ओषधिषु चित्रः शिशुः परि तमाᳪस्यक्तूनिति चित्रो वा ऽएष शिशुः परीणि तमाᳪस्यक्तूनतिरोचते प्र मातृभ्यो ऽअधि कनिक्रदद्गा इत्योषधयो वा ऽएतस्य मातरस्ताभ्य एष कनिक्रददेति तदश्वे व्वीर्यं दधाति * ॥ २ ॥

अथ रासभᳪ । स्थिरो भव व्वीड्वङ्ग आशुर्भव व्वाज्यर्व्वन्निति स्थिरश्च भव व्वीड्वङ्गश्चाशुश्च भव व्वाजी चार्व्वन्नित्येतत् पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहण इति पृथुर्भव सुशीमस्त्वमग्नेः पशव्य-वाहन इत्येतत्तद्रासभे व्वीर्यं दधाति ॥ ३ ॥

अथाजᳪ । शिवो भव प्रजाभ्यो मानुषीभ्यस्त्व-मङ्गिर इत्यङ्गिरा वा ऽअग्निराग्नेयोऽजः शमय-त्येवैन मेतद्दहिᳪसायै मा द्यावापृथिवी ऽअभि-शोचीर्मान्तरिक्षं मा व्वनस्पतीनित्येतत् सर्व्वं मा हिᳪसीरित्येतत्तदजे व्वीर्यं दधाति ॥ ४ ॥

---

* 'दधाति'—[illegible] ३ ।

त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्यावानग्निर्या-
वत्यस्य मात्रा तावतैवैनमेतद्वीर्यं दधाति ॥ ५ ॥

अथैन मेतेषां पशूना मुपरिष्टात् प्रगृह्णाति ।
तदेन मेतैः पशुभिः सम्भरति नोपस्पृशति वज्रो
वै पशवो रेत इदं नेदिदꣳ रेतो वज्रेण हिन-
सानीत्यथो ऽग्निरयं पशव इमे नेदय मग्निरि-
मान् पशून् हिनसदिति ॥ ६ ॥

त मश्वस्योपरिष्टात् प्रगृह्णाति । प्रैतु वाजी
कनिक्रददिति प्रैतु वाजी कनिक्रद्यमान इत्ये-
तन्नानदद्रासभः पत्वेति तदश्वस्य यजुषि रासभं
निराह तद्रासभे शुचं दधाति भरन्नग्निं पुरीष्यं
मा पाद्यायुषः पुरेति भरन्नग्निं पशव्यं मो
ऽस्मात् कर्मणः पुरा पादीत्येतत्तदेन मश्वेन
सम्भरति ॥ ७ ॥

अथ रासभस्य । वृषाग्निं वृषणं भरन्निति
वृषा वा ऽअग्निर्वृषा रासभः स वृषा वृषाणं
भवत्यपाङ्गर्भꣳ समुद्रिय मित्यपाꣳ ह्येष गर्भः समु-
द्रियस्तदेनꣳ रासभेन सम्भरति ॥ ८ ॥

अथापादत्ते * । अग्न ऽआयाहि वीतय ऽइ-त्यवितव ऽइत्येतत्तदेनं ब्रह्मणा यजुषैतस्मात्क्षौद्रा-द्घ्रणादपादत्ते † ॥ ९ ॥

अथाजस्य । ऋतꣳ सत्यमृतꣳ सत्य मित्ययं वा ऽअग्निर्ऋत मसावादित्यः सत्यं यदि वासावृत-मयꣳ सत्य मुभयम्वेतदय मग्निस्तस्मादाह ऽर्तꣳ सत्य-मृतꣳ सत्य मिति तदेन मजेन सम्भरति ॥ १० ॥

त्रिभिः सम्भरति । त्रिवृदग्निर्यावानग्निर्या-वत्यस्य मात्रा तावतैवैन मेतत् सम्भरति त्रिभिः पुरस्तादभिमन्त्रयते तत् षट् तस्योक्तो बन्धुः ॥ ११ ॥

अथैतान् पशूनावर्त्तयन्ति । तेषा मजः प्रथम एत्यथ रासभो ऽथाश्वो ऽथेतो यता मश्वः प्रथम एत्यथ रासभो ऽथाजः क्षत्रं वा ऽअश्वो वैश्यं च शूद्रं चानु रासभो ब्राह्मण मजः ‡ ॥ १२ ॥

तदुदितो यताम् § । अश्वः प्रथम एति तस्मात्

* 'अथापादत्ते'—इति क, ख ।
† '०दपादत्ते'—इति ग, घ ।
‡ 'मजः'—इति ग, घ ।
§ 'यताम्'—इति ग, घ ।

क्षत्रियं प्रथमं यन्त मितरे त्रयो व्वर्णाः पश्चादनुयन्त्यथ यदसुर आयता अजः प्रथम एति तस्माद् ब्राह्मणं प्रथमं यन्त मितरे त्रयो व्वर्णाः पश्चादनुयन्त्यथ यन्नैवैतो यतो नामुतो रासभः प्रथम एति तस्मान्न कदा चन ब्राह्मणश्च क्षत्रियश्च व्वैश्यं च शूद्रं च पश्चादन्वितस्तस्मादेवं यन्त्यपापवस्यसायाथो ब्रह्मणा चैवैतत् क्षत्रेण चैतौ व्वर्णावभितः परिगृह्णाति ऽनपक्रमिणौ कुरुते * ॥ १३ ॥

अथानदापुरुष मोचते । अग्निं पुरीष्य मङ्गिरस्वद्भराम इत्यग्निं पशव्य मग्निवद्भराम इत्येतद्देन मनसापुरुषेण सम्भरति ॥ १४ ॥

त मजस्योपरिष्टात् प्रगृह्णाति । आग्नेयो वा ऽअजः स्वेनैवैन मेतदात्मना स्वया देवतया सम्भरत्यथो ब्रह्म वा ऽअजो ब्रह्मणैवैन मेतत् सम्भरति ॥ १५ ॥

अथैन मुपावहरति । ओषधयः प्रतिमोदध्व मग्नि मेतꣳ शिव मायन्त मभ्यत्र युष्मा इत्येतद्वैत-

---

* 'कुरुते'—इति क, ख।

स्मादायत ओषधयो विभ्यति यद्वै नो ऽयं न हिᳬ-
स्यादिति ताभ्य एवैन मेतच्छमयति प्रश्नेनं मोद-
ध्वᳬ शिवो वो ऽस्त्वेति न वो हिᳬसिष्यतीति
व्यस्यन्विश्वा अनिरा अमीवा निषीदन्नो ऽअप
दुर्म्मतिं जहीति व्यस्यन्विश्वा अनिराश्चामीवाश्च
निषीदन्नो ऽप सर्व्वं पाप्मानं जहीत्येतत् * ॥ १६ ॥

ओषधयः प्रतिगृह्णीत । पुष्पवतीः सुपिप्पला
इत्येतद्वैतासाᳬ समृद्धᳬ रूपं यत् पुष्पवत्यः सुपि-
प्पलाः समृद्धा एनं प्रतिगृह्णीतेत्येतदयं वो गर्भ
ऋत्वियः प्रत्नᳬ सधस्थ मासददित्ययं वो गर्भ ऋत-
व्यः सनातनᳬ सधस्थ मासददित्येतत् † ॥ १७ ॥

द्वाभ्या मुपावहरति । द्विपाद्यजमानो यजमानो
ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवेन मेतदुपा-
वहरति तं दक्षिणत उदञ्च मुपावहरति तस्योक्तो
बन्धुरुद्धत मवोक्षितं भवति यत्रैन मुपावहरत्युद्धते वा
ऽअवोक्षितेऽग्नि मादधति सिकता उपकीर्या भवन्ति
तासा मुपरि बन्धुः ॥ १८ ॥

---

* 'जहीत्येतत्'—इति ग, घ ।

† 'सधस्थ मासददित्येतत्'—इति ग, घ ।

परिश्रितं भवति। एतद्वै देवा अबिभयुर्यद्वै न इम मिह रक्षाᳬसि नाष्ट्रा न हन्युरिति तस्मा उएतां पुरं पर्य्यश्रयंस्तथैवास्मा उअय मेतां पुरं परि-श्रयत्यथो योनिर्व्वा उइयᳬ रेत इदं तिर इव वै योनौ रेतः सिच्यते योनिरेष मेतत् क्रियते तस्मादपि स्वया जायया तिर इवैव चिच-रिषति * ॥ १९ ॥

अथैनं क्षिप्यति। तद्यदेवास्यात्रोपनहय सᳬशुच्यति ता मेवास्मादेतच्छुचं बहिर्धा दधात्यथो उएतया एवैन मेतद्योनेः प्रजनयति ॥ २० ॥

बि पाजसा पृथुना शोशुचान इति। बि पाजसा पृथुना दीप्यमान इत्येतद्बाधस्व द्विषो रक्षसो उअमीवा इति बाधस्व सर्व्वान् पाप्मन इत्ये-तत् सुशर्म्मणो बृहतः शर्म्मणि स्या मग्नेरहᳬ सुह-वस्य प्रणीताविस्याशिष माशास्ते † ॥ २१ ॥

अथाललोमान्याच्छिद्य ‡। उदीचः प्राचः

* 'चिचरिष्यति'—इति क।

† 'माशास्ते'—इति क, ख।

‡ 'अथाललोमान्याच्छिद्य'—इति क, ग, घ।

पशून् प्रजनयेथा इत्युभयेषां देवमनुष्याणां द्विप-दुदीचौ प्राच्येतस्यां तद्दिशि पशून्दधाति तस्मादुभये देवमनुष्याः पशूनुपजीवन्ति ॥ २२ ॥ ५ ॥

॥ इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् [8. 8.] ॥

अथ मृत्पिण्डस्थापितेन यज्ञभिमन्त्रणं विधत्ते— "स्वस्त एष भवतीति । 'एषः' मृत्पिण्डः । "एतद्वा इत्यादेरय मर्थः— 'एतद्' इदानीं पिण्डसम्भरणकाले यज्ञभिमन्त्रणेन एतु 'वीर्यं' 'देवाः' इव 'मयं' यजमानोऽपि 'दधाति' निहितवान् भवतीति ॥ १ ॥

पुनः मन्त्राभिमन्त्रणं विधत्ते— "सोऽग्ने मिति * । अग्नी-ऽन्यात्मना स्तूयते— 'यः' त्वं 'रोदस्योः' द्यावापृथिव्योः 'गर्भः' इति जातः असि', तथा 'ओषधीषु' ओषधिवनस्पत्यादिषु विष-येषु 'चारु' 'विभृतः' विशेषेण सम्भृतोऽसि, 'चित्रः' चित्र-वर्णः, 'शिशुः', 'अक्तून्' अक्तुशब्दो रात्रिवचनः, तमस्यानि 'तमांसि' 'परि' योग्यक्रियाध्याहारः, परीत्य, अतिरोचत इति । 'मातृभ्यः'-इति चतुर्थी । ओषधयोऽत्र मातृशब्दवाच्याः, तदर्थम्, तद्रक्षणार्थं 'कनिक्रदत्' अत्यर्थं ध्वनितशब्दं कुर्वन् 'प्रगाः' प्रगच्छसि † । "इणो गा लुङि"-इति गादेशः ‡ ।

मन्त्रं प्रतिपदं समूह्य व्याचष्टे— "इमे वै द्यावापृथिवी रोदसी इति ॥ २ ॥

* वा० श्रौ० सं० १२ । ४ ।
† पा० सं० ११ । ४३ ।
‡ पा० सू० २, ४ । ४५ ।

रासभाभिमन्त्रणे मन्त्रं विधत्ते— "अथ रासभं स्थिरो भवेति *। हे 'अर्वन्' अरणवन् ! रासभ ! 'स्थिरः' निश्चलः 'भव'। 'वीड्वङ्गः' दृढाङ्गः, 'आशुः' शीघ्रगतिः, 'वाजी' वेगवांश्च 'भव' इति। 'पृथुः' स्थूलः भव। 'सुषदः' शोभनसदनवान् भव। 'अग्नेः पुरीषवाहणः' गोमयस्य सैकतस्य वा वाहकत्वात् रासभस्य पुरीषवोढृत्वं प्रसिद्धम् ॥ ३ ॥

अजाभिमन्त्रणं विधत्ते— "अथाजं शिवो भवेति †। अङ्गिरःपदेन अग्निरुच्यते; तद्देवत्यत्वात्। हे 'अङ्गिरः' अग्निरूप ! अज ! त्वं 'मानुषीभ्यः प्रजाभ्यः' 'शिवो भव'। 'द्यावापृथिवी' 'मा अभिशोचीः' मा हिंसीः। तथा 'अन्तरिक्षं', 'वनस्पतीन्'। सर्वत्र 'मा अभिशोचीः'-इति क्रियापदं अनुषङ्क्तुमिति पदं प्रयुक्तम्। मन्त्रस्यार्थयोस्तात्पर्यं माह— "अङ्गिरा वा अग्निरित्यादिना ॥ ४ ॥

अश्वादिपशुत्रयाभिमन्त्रणगतसङ्ख्यां प्रशंसति— "त्रिभिरभिमन्त्रयते इति। अग्नेस्त्रिवृत्त्वं पुरस्तादुक्तम् ॥ ५ ॥

अत्र सूत्रम्— "धारयत्येषामुपरि पिण्डमनुपस्पृशन्निति ‡। 'एषां' त्रयाणां पशूनां उपरितनात् पशून् अनुपस्पृशन् पिण्डं धारयेदित्यर्थः। तदिदं विधत्ते— "अथैनं नैतेषां पशूनामिति। उपस्पर्शनाभावं प्रशंसति— "वज्रो वै पशव इति। यतो वज्ररूपाः पशवः, मृत्पिण्डश्च रेतोरूपः, अतो वज्रेण रेतः विच्छिन्नं न करोमीति बुद्ध्या न स्पृशेत् पशून्। अथवा 'अयं' मृत्पिण्डो

* वा० सं० ११. ४४।
† वा० सं० ११. ४५।
‡ का० श्रौ० सू० १६. ३. २०

हि 'अग्निः', अग्निः पशून् मा हिंसीदिति बुद्ध्या न स्पृशेत्। 'हिनसानि'-इति लोटि रूपम्, 'हिनसत्'-इति पञ्चमलकारे रूपम् ॥ ६ ॥

अथाश्वस्योपरि धारणं समन्त्रं विधत्ते—"तमश्वस्योपरिष्टा-दिति *। 'वाजी' बलवान् अश्वः 'प्रैतु' आगच्छतु। तं विशिनष्टि— 'कनिक्रदत्' अत्यर्थशब्दं कुर्वन्, 'नानदत्' सर्वा दिशो नादयन् 'रासभः' उपमाशब्दलोपः गर्दभ इव 'पत्वा' पतनशीलः। पतेः क्वनिपि रूपम्। 'पुरीष्यं' पशुहितम् 'अग्निम्' धारयन्, 'आयुषः' कर्मणोऽस्मात् 'पुरा' 'मा पादि' मा विनश्यतु †। पदेश्चिणि रूपम्।

अश्वस्योपरि धारणमन्त्रे रासभः पत्वेति गर्दभवचनस्य प्रयोजनमाह— "तदश्वस्य वपुषि रासभं निराह"इति। अश्व-मन्त्रे रासभवचने तस्माद्रासभः अश्वस्यातिशयितत्वोक्तेः तस्मिन् गर्दभे शोकबलराहित्यमेव निहितं भवतीति। 'आयुषः'-इति-पदस्यार्थमाह 'कर्मणः' इति ॥ ७ ॥

अथोत्तरा ऋक्, संहितायामेव माम्नायते ‡—

"वृषाग्निं वृषणं भरन्नपाङ्गर्भꣳ समुद्रियम्
अग्न आयाहि वीतये ऋतꣳ सत्य ऋतꣳ सत्य
मग्निम्पुरीष्य मङ्गिरस्वद् भरामः"-इति §।

---

* का० श्रौ० सू० १६. ३. १०।

† वा० सं० ११. ४६. १।

‡ अस्मद्दृष्टसंहितायास्तु 'वृषाग्निम्'-इत्यादिः 'समुद्रियम्'-इत्यन्तः पाठः ४६ कण्डिकांशः।

§ वा० सं० ११. ४७।

महाबृहतीयम्, "चत्वारोऽष्टका पादा जागतश्च महाबृहती" -इति। तस्य विभज्य विनियोगो विधीयते। तत्र तस्याः पूर्वार्द्धं तु रासभस्योपरि धारणम्, तृतीयपादेनाजस्योपरि धारणाय रासभ मृत्पिण्डहरणम्, चतुर्थेनाजस्योपरि धारणम्, पञ्चमेनानड्वापुरुषेक्षणम्। तदाह सूत्रकारः— 'प्रैतु वाजी वृषाग्नि मित्यश्वखुरयो अत्र आयाहीत्याहृत्य खराच्छागस्योपरि सत्य मित्यभिधानात्, आयत्याजयं पशुगत्र पुरस्ताद्रासभो मध्ये, अस्थागस्थिताना मिवाहरति, अनड्वापुरुष मीयते पूर्ववदग्निं पुरीष्य मिति"-इति *। तदिदं सर्वं विधत्ते— "अथ रासभस्य वृषाग्निं वृषण मित्यादिना।

मन्त्रस्याय मर्थः †,— 'वृषणं' वर्षक मद्रूपम् 'अग्निं' 'भरन्' 'अपाङ्गर्भं' गर्भभूतं, समुद्रे अन्तरिक्षे भव 'समुद्रियं' 'भरन्' 'अग्ने' मद्रूप 'वृष' सिञ्च। वृषतेर्लोटि रूपम्। अथार्द्धं रासभ सम्बोध्य।

भाष्ये, वृषेति कप्रत्ययान्त पद मिति व्याख्यात— "वृषा वा अग्निरिति।— तथाय मर्थः,— 'वृषा' रेतस सेक्ता 'रासभ' 'वृषणम् अग्निं भरन्', तिष्ठतीति क्रियाध्याहारः। तृतीयपादे अग्निं सम्बोध्य। हे 'अग्ने' मद्रूप। 'वीतये' तर्पणाय 'आयाहि' रासभादागच्छ। 'ऋतम्' अग्निं, 'सत्यम्' आदित्यं, यद्वा, 'ऋतम्' आदित्यं, 'सत्यम्' अग्निं, उभयरूप मग्निम्, आहरिष्यामीति शेषः। 'पुरीष्यं' पशुहित मग्निम्, 'अङ्गिरस्वत्' अग्निवत् 'भरामः' सम्भराम इति।

---

* का॰ श्रौ॰ सू॰ १६ २ ११ १२, १३।

† पाठस्तस्य वा॰ सं॰ ११ ४६ ख, ४७ क।

मन्त्रगतानि पदानि व्याचष्टे— "वृषा वा अग्निरिति ।, "तदेनं रासभेनेति । मन्त्रस्य पूर्वार्द्धेन रासभस्योपरि मृत्पिण्डधारणेन तस्मिन् इदं सम्भृतवान् भवति ॥ ८ ॥

खरात् अकाण्डात् मृदाहरणं समन्त्रं विधत्ते— "अथा-पादत्त इति । "अन्न आयाहीति तृतीयः पादः * । 'वीतये' -इत्यस्यार्थं आह— "अवितव इत्येति । तर्पणार्थाद् वेतेः† "मन्त्रे वृषेष०"-इति ‡ क्तिन्, स चोदात्तः । अपादानं प्रशंसति— "तदेनं तस्मादिति । 'एनं' मृत्पिण्डं 'अनया' अन्नरूपेण 'यजुषा' "अन्न आयाहि"-इति पाठेन 'एतस्मात्' 'शौद्रात्' अर्थात् अपादत्तवान् भवति । रासभस्य वैश्यशूद्रजातिसम्बन्धो वक्ष्यते— "वैश्यं च शूद्रं चानु रासभ इति § ॥ ९ ॥

अजस्योपरि धारणमन्त्रं विधत्ते— "ऋतं सत्यमिति । ऋतं सत्यमिति द्विवारं पठ्यते, तत्र प्रथमर्तसत्यपदयोरर्थं आह— "अयं वा अग्निर्ऋतमिति । "यदि वेति, द्वितीयर्त-सत्यपदयोरर्थकथनम् । 'असौ' विप्रकृष्टः 'आदित्यः' 'ऋतम्', 'अथ अग्निः सत्यम्'; उभयरूपोऽयं अग्निर्मृत्पिण्डः ॥ १० ॥

अग्निम्पुरीष्यमिति मन्त्रशेषस्य विनियोग उत्तरत्र वक्ष्यते ‖, इदानीं अश्वादीनामुपरि धारणे विनियुक्तमन्त्रगतसङ्ख्यां त्रिवृ-दन्यात्मना स्तौति— "त्रिभिरिति । "प्रैतु वाजी"-इति

---

* ३३८ पृ० १८पं० द्रष्टव्यः ।

† धातु० भ० ३०धा० ।

‡ पा० सू० ३. ३ ९६ ।

§ इहैव वाक्यकण्डी (२१२ पृ०) द्रष्टव्यम् ।

‖ इहैवोपरिष्टात् चतुर्थकण्डी (२२२) द्रष्टव्यम्

एको मन्त्रः, "दृषाग्निः"—इति महाख्यत्या मपरः; रासभाजयोरुपरि धारणे विनियुक्तौ द्वौ मन्त्रौ *। मन्त्रस्य लक्षणं याज्ञिकसमाख्यान मिति; अत एकस्या ऋचि विभज्य विनियोगात् अस्या बह्वयः सम्याख्याः इत्यविरोधः †।

पूर्वं मश्वाद्यभिमन्त्रणे विनियुक्तमन्त्रसङ्ख्याम् निश्चित्य प्रशंसति— "त्रिभिः पुरस्तादिति। अभिमन्त्रणमन्त्रास्त्रयः, धारणमन्त्रास्त्रयः, ते षट् सम्पद्यन्ते; तस्य स्तावकं माह्मण मतिदिशति—"तस्योक्तो बन्धुरिति। पिण्डपरिग्रहमन्त्रसङ्ख्याप्रस्तावे—"ताः षट् सम्पद्यन्ते, षड् ऋतवः"—इत्यादिना ‡ ॥ ११ ॥

अथैतेषां पशूना मावर्त्तनं विधत्ते— "पर्येनान् पशूनिति। स्वस्थानावस्थिताना मेवावर्त्तनम्। तत्रागन्तृणां पशूनां क्रमं विधत्ते —"तेषा मजः प्रथम इति §। पूर्वम् 'इतः' मृदाहरणार्थं 'यतां' गन्तृणां 'पशूनां' मध्ये 'अश्वः' प्रथमो गतः, 'रासभः' मध्ये, पश्चात् 'अजः'; अधुना 'अजः' प्रथमः, 'रासभः' मध्ये, पश्चात् 'अश्वः'। गमनागमनयोरुभयोरपि रासभस्य मध्येऽवस्थानम्, अश्वाजयोरेव पौर्वापर्यम्। "सर्वं वा अन्यस्यः"—

---

* वा॰ सं॰ ११. ४६. १, ४६. २, ३, ४७. १। अथात्र महीधरः— "का॰ धारयन्त्येषां सुपरि पिण्ड मनुपश्यन् प्रैतु वाजी दृषाग्नि मित्यश्वखरयोरिति। अश्वादीनां सुपरि पिण्डं धारयति सानसृभन् प्रैतु वाजीत्यश्वोपरि दृषाग्नि मिति खरोपरीति सूत्रार्थः। महापङ्क्तिस्त्र्यवसाना अष्टार्णषट्पादा महापंक्तिः। आद्याबर्द्धर्चौ वैश्वदेवत्यौ, तृतीयो द्वैतीरासभदेवत्यः, तृतीयचतुर्थपादौ यूथ्यौ"—इति।

† पुरस्तात् २३८ पृ॰ ४ पङ्क्तितः २३९ पृ॰ १॰ पङ्क्तिपर्यन्तं द्रष्टव्यम्।

‡ पुरस्तात् ३ प्र॰ ३ आ॰ १॰ क॰ (२१३ पृ॰) द्रष्टव्या।

§ का॰ श्रौ॰ सू॰ १६. ३. १२।

इत्यादेरयमर्थः — अश्वादिपशुत्रयस्य क्षत्रियजातिसम्बन्धः, क्षत्रियस्य राज्ञ इतरेभ्यस्त्रिभ्यो वैश्यशूद्रब्राह्मणेभ्यः पुरस्तात् गमनं लोके दृष्टमिति। तत्र यथा गमनसमये अश्वस्य प्राथम्यम्, तथा ब्राह्मणस्यानूचानस्य स्वव्यतिरिक्तवर्णत्रयात् प्रथमगमनं च दृश्यत इति अधुना अजस्य प्राथम्यम्, वैश्यशूद्रयोः क्षत्रियाद् ब्राह्मणाद्वा पुरस्ताद् गमनं नास्तीति मृदाहरणसमये पुनरागमनसमये च रासभस्य न प्राथम्यम्। तस्मात् कारणादेवम् — यान्ति अश्वपूर्वाः प्रथमे, अधुनाऽजपूर्वा आगच्छन्ति 'अपापवस्यसाय' पापपरिहाराय। ब्राह्मणेन क्षत्रियेण च 'एतौ' वैश्यशूद्रौ 'अभितः' मध्ये 'परिगृह्णीतो', 'अनपक्रमिणौ' अनपक्रान्तौ 'कुरुतो' ॥ १२, १३ ॥

विधत्ते — "अथानड्वाहपुरुष मिति *। तत्र पुरुष मिति पञ्चमम्। "अग्निं पुरीष्य मिति †। तदीक्षणेन तेनापि 'अगवा-पुरुषेण' पुरुषपशुप्रतिनिधिना सर्वं सम्भृतवान् भवति ॥ १४ ॥

विधत्ते — "तं अजस्योपरिष्टादिति। अजस्योपरि मृत्पिण्डं धारयन्नेव 'एति' आगच्छेदध्वर्युः। तथाविधं गमनं मुभयथा प्रशंसति — "आग्नेयो वा अज इति। 'अजः' अग्निदेवत्यः, मृदप्यग्निः; अतोऽजस्योपरि धारणात् स्वेन रूपेण स्वदेवत्यं च सम्भृतवान् भवति। अपि अजो ब्राह्मणजातीयः; ततो ब्राह्मणेनाप्येनं मृत्पिण्डं सम्भृतवान् भवति ॥ १५ ॥

अथाजस्कन्धात् मृत्पिण्डस्यावरोहणं समन्त्रं विधत्ते ‡ —

---

* का० श्रौ० सू० १६. ३. १२।
† वा० सं० ११. ४७. २ ।
‡ का० श्रौ० सू० १६ ३. १४ ।

"अयेन सुपावहरतीति। हे 'ओषधयः!' 'युष्माः' अत्र अस: सकारस्य "तस्माच्छसो नः"–इति * नत्वं रुत्वं विसर्जनीयः, युष्मानभिलक्ष्य 'आयन्तम्' आगच्छन्तं 'शिवम्' 'एतं' पुरोवर्त्ति-नम् 'अग्निं' 'प्रति मोदध्वम्' प्रतिमोदध्वं भयराहित्यार्थम्।

उत्तरार्द्धे † रुद्ररूपोऽग्निः सम्बोध्यः। 'विश्वाः' 'अनिराः' 'इरा' –इत्यन्ननाम ‡। अन्नप्रतिबन्धहेतून् अनाद्यष्टादीन्, 'अमीवाः' रोगाय 'व्यस्यन्' विक्षिपन्, हेतौ शतृप्रत्ययः। रोगादिविक्षे-पाद्धेतोः 'निषीदन्' उपविशन्, 'नः' अस्माकं 'दुर्मतिं' दुष्टु-तिमयीं मतिम् 'अपजहि' अपनयेति।

प्रतिमोदध्वमिति यदोषधीः प्रत्युक्तम्, तस्याभिप्रायमाह— "एतद्वैतस्मादायत ओषधय इति। 'आयतः' अग्नेः सकाशात् 'ओषधयो बिभ्यति' स्वस्वात्मानं भक्षयिष्यति किलेति। तत्परि-हाराय प्रतिमोदध्वमिति। यतोऽग्निः शान्तः, ओषधयो यूयं एनं प्रतिमोदध्वम्, 'शिवः' सुखकर एव सन्नयं 'वः' युष्मान् 'अभ्येति' अभिगच्छति; न वो हिंसिष्यतीति तात्प-र्यार्थः। उत्तरार्द्धगतं दुर्मतिपदं व्याचष्टे— "सर्वं पाप्मानं जहीति॥ १६॥

द्वितीयं मन्त्रं विधत्ते— "ओषधयः प्रतिगृभ्णीतेति §"। हे 'ओषधयः'। 'एनम्' अग्निम् 'प्रतिगृह्णीत'। ता विशि-नष्टि— 'पुष्पवतीः' पुष्पवत्यः, पुष्पसम्पन्नाः, 'सुपिप्पलाः'

* पा० सू० ६ १ १०३।
† वा० सं० ११. ४७, २ मन्त्रम्।
‡ निघ० २ अ० ७ ख० १२ प०।
§ वा० सं० ११ ४८।

सप्तमकाण्डादौ गार्हपत्यचयनप्रस्तावे वक्ष्यत इत्याह— "तासा मुपरि वस्तुरिति * ॥ १८ ॥

"परिश्रितं भवतीति। तासां विकीर्णानां परिश्रित मिव परिवृतं भवेत्। परिश्रित्करणं नाम रक्षोभीत्या पुरस्य करण मित्यर्थः। प्रकारान्तरेण स्तौति— "अथो योनिर्वा इय मिति। इदं परिश्रितं स्थानं योनिरूपम्, 'इदं' पिण्डरूपं 'रेतः' इतश्च योनौ 'तिरः' तिरोहितम् अप्रकाशं 'सिच्यते'। अत्रा मर्थे लोकप्रसिद्धिं दर्शयति— "तस्मादिति। 'तस्मात्' खलु लोके 'स्वया जायया अपि' परिवृतस्थाने 'तिर इवैव' 'चिचरिषति' चरितु मिच्छति ॥ १९ ॥

"अथैनं विष्यतीति †। 'विष्यति' प्रमुञ्चेत्। पूर्वं कृष्णाजिनपुष्करपर्णयोर्मध्ये पिण्डं निधाय, अन्ताम् उद्गृह्य, योक्त्रेण बन्धनं कृतम्; तद् योक्त्रं मन्त्रोच्चारणपूर्वं मुञ्चेदित्यर्थः। "तस्य-दैवास्येति। पूर्वमन्त्रोपनद्धस्य बद्धस्य पिण्डस्य शोको जातः, 'तां' बन्धनजातां 'शुचं' 'वह्निः' तद्विमोकेन निर्हृतवान् भवति। किञ्च पुष्करपर्णं च योनिरूप मित्युक्तम् ‡, अतो बन्धनरूपयोक्त्रविमोकात् 'योनेरेव' पिण्डं सुखाद्यात्मना आयता मित्यभिप्रायेण तद्विमोक इत्यर्थः ॥ २० ॥

मन्त्रं विधत्ते— "विपाजसा पृथुनेति §। पाज इति बल-नाम ‖। 'पृथुना' बलेन 'शोशुचानः' दीप्यमानोऽग्निस्त्वं'

---

* उपरिष्टात् (७ का० ५ प्र० १ ब्रा० ६, १० कं०) द्रष्टव्ये।

† का० श्रौ० सू० १६. ३. १५ क।

‡ पुरस्तात् २०३ पृ० ७ कं० द्रष्टव्या।

§ वा० सं० ११ ५६। ‖ निघ० २ अ० ६ ख० १ प०।

'द्विषः' द्वेष्यान् 'रक्षसः' राक्षसांश्च 'अमीवाः' रोगांश्च 'वि बाधस्व'। एवं प्रत्यक्षतो याचित्वा, इदानीमग्निं परोक्षीकृत्य स्वय माशिषमाशास्ते 'सुशर्मणः' साधुशरणस्य, 'बृहतः', 'स्वध्वरस्य' शोभनाध्वरस्य 'अग्नेः' 'प्रणीतौ' प्रकृष्टनीतौ 'शर्मणि' शरणे अहं 'स्याम्' भवेय मित्यर्थः। मन्त्रस्यार्धयोस्तात्पर्य माह— "बाधस्व सर्वान् पाप्मन इति, "आशिष माशास्ते इति च ॥ २१ ॥

अथ सूत्रम्— "अजलोमान्यादाय प्राङुदीचः पशूनुत्सृजतीति *। तद् विधत्ते— "अथाजलोमानीति। 'उदीचः प्राचः' ईशानदिगभिमुखान् 'प्रसृजति' विसृजेत्। तां दिशं प्रशंसति— "एषा ह्युभयेषा मिति। गतमन्यत् ॥ २२ ॥ ५ [ ४. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ४ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरीस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यः,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥

---

* का० श्रौ० सू० १६. २ २५।

धान्याद्रिं धन्यजन्मा तिलभव मतुल: स्वर्णजं वर्णमुख्य:,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्य ।
आज्योत्थं भाज्यजन्मा लवणज मतृष: शार्करं चार्कतेजा:,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पावमाखिङ्कयार्यः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

---

* अस्यार्थोऽन्यः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्यः ।

अथाजलोमैः सꣳसृजति । स्थेम्ने न्वेव यद्वे-वाजलोमैरेतद्वा ऽएनं देवाः पशुभ्योऽधि समभरं-स्तथैवैन मय मेतत् पशुभ्योऽधि सम्भरति तद्यद-जलोमैरेषाजे हि सर्व्वेषां पशूनाꣳ रूप मथ यल्लोम लोम हि रूपम् ॥ ४ ॥

मित्रः सꣳसृज्य । पृथिवीं भूमिञ्च ज्योतिषा सहेति प्राणो वै मित्रः प्राणो वा ऽएतदग्रे कर्मा-करोत् सुजातं जातवेदस मयक्ष्माय त्वा सꣳसृजामि प्रजाभ्य इति यथैव यजुस्तथा बन्धुः ॥ ५ ॥

अथैतत्त्रयं पिष्टं भवति । शर्कराश्मायोरस-स्तेन सꣳसृजति स्थेम्ने न्वेव यद्वेव तेनैतावती वा ऽइय मग्रे ऽसृज्यत तद्यावतीय मग्रे ऽसृज्यत तावती मेवैना मेतत् करोति * ॥ ६ ॥

रुद्राः सꣳसृज्य । पृथिवीं बृहज्ज्योतिः समी-धिर ऽइत्यसौ वा ऽआदित्य एषो ऽग्निरेतद्वै तद्रुद्रा सꣳसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे तेषां

---

* 'करोति'—इति क, ख ।

उग्वुं करोतु । शक्त्या वाहुभ्या मदितिर्द्धियेति शक्त्या च हि करोति बाहुभ्यां च धिया च माता पुत्रं यथोपस्थे साग्निं बिभर्त्तु गर्भ ऽएति 'यथा माता पुत्र मुपस्थे बिभृयादेव मग्निं गर्भे बिभर्त्त्वित्येतत् * ॥ ११ ॥

त्रिभिः प्रयौति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् प्रयौति द्वाभ्यामु सउसृजति तत् पञ्च पञ्चचितिको ऽग्निः पञ्चऽर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति त्रिभिरप उपसृजति तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत् तद् भवत्यथो ऽष्टाक्षरा वा ऽइय मग्रेऽसृज्यत तद्यावत्येव मग्रेऽसृज्यत तावती मेवैना मेतत् करोति ॥ १२ ॥ ६ ॥

॥ इति तृतीयप्रपाठके षष्टं ब्राह्मणम् [५. १.] ॥

---

* 'बिभर्त्त्वित्येतत्'—इति च, छ ।

भावयित्र्यः । 'स्थ'। 'हि' यस्मात् ता एवम्भूता यूयं 'नः' अस्मान् 'ऊर्जे' अन्नाद्याय 'दधातन' स्थापयत । "तप्तनप्तनथनाश्च"–इति * तस्य तनबादेशः । 'महे' महते 'रणाय' रमणीयाय 'चक्षसे' दर्शनाय, ज्ञानाय धत्तेति ॥ ॥ "यो वः इति । 'वः' युष्माकं 'यः' 'शिवतमः' अतिशयेन सुखकरः 'रसः', 'तस्य' रसस्य 'नः' अस्मान् 'इह' लोके 'भाजयत' भागिनः कुरुत । 'उशतीः' कामयमानाः 'मातर इव' यथा मातरः पुत्रस्य हितं कामयन्ते, एवं यूयमिति ॥ ॥ "तस्मा अरं मिति । 'वः' युष्मत्सम्बन्धिने 'तस्मै' रसाय 'अरं' शीघ्रम्, 'अलं' पर्याप्तं वा 'गमाम' गच्छेम । "क्रियार्थोपपदस्य"–इति † चतुर्थी । 'यस्य' रसस्य 'क्षयाय' अस्मासु निवासार्थं हि यूयं 'जिन्वथ' प्रीणयथ । 'जिवि प्रीणनार्थः' ‡ । येन रसेन अस्मान् तर्पयथ, तं गच्छेम । हे 'आपः' 'नः' अस्मान् 'जनयथ' युष्मदीयभोक्तृत्वेनोत्पादयतेति तृचस्य सङ्गृहीतोऽर्थः ॥

तिस्र ऋचः, तत्प्रतिपाद्या अब्देवताश्च प्रशंसति— "यां वै देवता मिति । 'आपो हि ष्ठेत्यादिका 'ऋक्' 'यां देवताम्' 'अभ्युक्ता' अनुवदति, कर्त्तरि क्तप्रत्ययः । 'यां' देवतां 'यजुः' अभ्युक्तोऽपि । यया ऋचा, येन यजुषा च, या देवता अन्यगुणाभिधानपुरस्सरं प्रतिपाद्यते, सैव प्रतिपाद्या देवता, सा च प्रतिपादिका ऋक्, यजुर्मन्त्रपदैरप्रतीयमाना देवता नोक्तमित्यर्थः । अतः प्रतिपाद्यप्रतिपादकयोरभेदोपचारेण 'एता'

---

* पा० सू० ७ १ ४५ ।

† पा० सू० २ ३ १४

‡ भ्वा० प० ५६४ धा०

आपः 'एव' देवताः, 'अपः' "आपो हि ष्ठाः"–इति 'त्रिचः'। 'तत्' तस्मात् 'याः' 'अमूः' अदःशब्दो विप्रकृष्टप्रदेशवचनः। पूर्वं काण्डादौ अग्निसृष्टेरनन्तरम् अबादि पृथिव्यन्तं सृष्टिमुक्त्वा *, "सोऽकामयताभ्योऽद्भ्योऽधि प्रजनयेय मित्युपक्रम्य †, "तदिद मेक मेव रूपं" ‡ जातवान् भवति। एव मनुसन्धानार्थं मुदकफेनमृत्सिकताशर्कराश्मादिसृष्टिरुक्तेति चयनादौ प्रतिपादितम् ‖ ॥ २ ॥

पिण्डे फेनासेचनं विधत्ते— "अथ फेनं जनयित्वेति §। यथायोदकेषु हस्तचालनेन फेन मुत्पाद्य पिण्डे तूष्णी मासिञ्चेत। "यदेव तत्फेन इत्यादेरय मर्थः। पूर्वं "सोऽकामयताभ्योऽद्भ्यो ऽधीमाः प्रजनयेयम्"–इत्युपक्रम्य, "तदिद मेक मेव रूपं समदृश्यतापः एव"–इति ‖, उदकलक्षणं रूप मुक्त्वा, "सोऽकामयत भूय एव स्यादिति तेपानः फेन मसृजत"–इति ¶ द्वितीयं फेनात्मकं रूपं सृष्ट्यात्मकम्। अत्र फेनस्य पिण्डे आसेचनेन पूर्वसृष्टफेनात्मकं द्वितीयं रूप मेव तद्रूपेऽग्नौ निहितवान् भवति।

अथ सिक्तेऽग्नौ उदकेन मृदः सम्मिश्रणं विधत्ते— "अथ या मेव तत्र मृद मिति। तत्र 'यां मृदं' 'संयौति' जलेन सम्मिश्रयति 'सा मृत्'। फेनादनन्तरं सृष्टं मृदात्मकं तृतीयं रूपम्। तत्र ह्येव माम्नातम्— "अथ यो गर्भोऽन्तरासीत् सोऽग्निरसृज्य-

---

* १ प्र० १ ब्रा० ११ कण्डीत: (४ पृ०) द्रष्टव्यम्।
†, ‡ ५ पृ० ८ पङ्क्तितो द्रष्टव्यम्।
§ का० श्रौ० सू० १६. ३ १७।
‖, ¶ ५ पृ० ८ पङ्क्तितो द्रष्टव्यम्।

ग्रावती *। या एवंविधा सिनीवाली, सा। हे 'अदिति', हे 'महि' महीरूपे! 'तुभ्यं' 'हस्तयोः' 'उखां' 'दधातु' स्थापयतु। "योषा वै सिनीवाली"-इत्यादिना योषात्वसमर्थनम् ॥ १० ॥

"उखां कृणोत्विति †। अयं तृतीयो मन्त्रः। तस्यायमर्थः,— 'अदितिः' अखण्डनीया, एतन्नामधेया देवता 'बाहुभ्यां' 'शक्त्या' सामर्थ्येन 'धिया' बुद्ध्या च 'उखां' 'कृणोतु' करोतु। 'यथा माता, पुत्रं' 'उपस्थे' क्रोडदेशे 'बिभर्ति', एवं सा अदितिः 'गर्भे' उखाभ्यन्तरे 'अग्निम्' 'आबिभर्तु' सर्वतो धारयतु 'इति' ॥ ११ ॥

अग्निश्रपणमन्त्रगतत्रित्वसङ्ख्यां त्रिवृदग्न्यात्मना स्तौति— "त्रिभिः प्रयौति त्रिवृदिति। पूर्वं अजलोमशर्करादिसंसर्गे मन्त्रौ द्वौ, ताभ्यां सहैतत्सङ्ख्यां प्रशंसति— "द्वाभ्यां संसृजति, तत् पञ्च पञ्चचितिकोऽग्निरिति। "पञ्चर्तव इति। "हेमन्तशिशिरयोः समासेन"-इत्युक्तम् ‡। अग्नेः संवत्सरात्मकत्वात्, अनेन पञ्चसङ्ख्यया तद्रूपं रूपं सम्पादितवान् भवति, अथोदकसेचने "आपो हि ष्ठेत्याद्यास्तिस्रः, ताभिः सहैतां पञ्चसङ्ख्यां प्रशंसति— "त्रिभिरुप उपसृजति तदष्टाविति। अग्नेर्गायत्रत्वं सङ्ख्यासामान्यात्। तथा चान्यत्राम्नातम्— "यद्वेवाष्टावग्निरूपाणि अष्टाक्षरा गायत्री, तस्मादाहुर्गायत्रोऽग्निरिति"-इति §।

---

* अशुद्धं पदमिदं स्यात् सायणस्य, "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकरः"—इति वैयाकरणसिद्धान्तात्।

† वा॰ सं॰ ११. ५७।

‡ ऐ॰ ब्रा॰ १. १. १।

§ ६ प्र॰ २ ब्रा॰ ६ क॰ (४१ ए॰) द्रष्टव्यम्।

यद्वेवाह मखस्य शिरोऽसीति । जायत एष एतदग्नीयने शीर्षतो वै मुखतो जायमानो जायते शीर्षतो मुखतो जायमानो जायाता इति ॥ २ ॥

तं प्रथयति । वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वदिति ध्रुवासीति ... ऽस्वङ्गिरा ध्रुवासीति स्थिरासीत्येतदयो प्रतिष्ठितासीति पृथिव्यसीति पृथिवी ह्येष निधिधारया मयि प्रजाएं रायस्पोषं गौपत्यए सुवीर्यए सजातान्यजमानायेत्येतद्वै वसव इम लोकं कृत्वा तस्मिन्नेता माशिष माशासत तथैवैतद्यजमान इमं लोकं कृत्वा तस्मिन्नेता माशिष माशास्ते तां प्रादेशमात्रीं कृत्वाधाद्यो सर्व्वतस्तीर मुन्नयति ॥ ३ ॥

अथ पूर्व्व सुद्धि मादधाति । रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदित्यन्तरिक्षए ह्येष उद्धिस्त मेतद् रुद्रास्त्रैष्टुभेन छन्दसा कुर्व्वंस्तथैवैन मय मेतत् त्रैष्टुभेन छन्दसा करोत्यङ्गिरस्वदिति प्राणो वा ऽस्वङ्गिरा ध्रुवासीति स्थिरासीत्येतदयो प्रतिष्ठिता-

सीत्यन्तरिक्ष मसीत्यन्तरिक्षᳪ᳭ ह्येष उखिर्धारया मयि प्रजाᳪ᳭ रायस्पोषं गौपत्यᳪ᳭ सुवीर्यᳪ᳭ सजातान्यजमानायेत्येतद्वै रुद्रा अन्तरिक्षं कृत्वा तस्मिन्नेता माशिष माशासत तथैवैतद्यजमानो ऽन्तरिक्षं कृत्वा तस्मिन्नेता माशिष माशास्ते ताᳪ᳭ संलिख्य सᳪ᳭- शृणाति * ॥ ४ ॥

अथोत्तर मुद्धि मादधाति। आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाङ्गिरस्वदिति द्यौर्वेष उखिस्त मेतदादित्या जागतेन छन्दसाकुर्वंस्तथैवैन मय मेतज्जागतेन छन्दसा करोत्यङ्गिरस्वदिति प्राणो वा ऽअङ्गिरा ध्रुवासीति स्थिरासीत्येतद्यो प्रतिष्ठितासीति द्यौरसीति द्यौर्ह्येष उखिर्धारया मयि प्रजाᳪ᳭ रायस्पोषं गौपत्यᳪ᳭ सुवीर्यᳪ᳭ सजातान्यजमानायेत्येतद्वा ऽआदित्या दिवं कृत्वा तस्या मेता माशिष माशासत तथैवैतद्यजमानो दिवं कृत्वा तस्या मेता माशिष माशास्ते ॥ ५ ॥

अथैतेन चतुर्थेन यजुषा करोति। विश्वे

* 'सᳪ᳭शृणाति'—इति क°, ग।

त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदिति दिशो हैतद्यजुरेतद्वै विश्वे देवा वैश्वानरा एषु लोकेषु खाया मेतेन चतुर्थेन यजुषा दिशोऽदधुस्तथैवैतद्यजमान एषु लोकेषु खाया मेतेन चतुर्थेन यजुषा दिशो दधात्यङ्गिरस्वदिति प्राणो वा ऽअङ्गिरा ध्रुवासीति स्थिरासीत्येतद्यो प्रतिष्ठितासीति दिशोऽसीति दिशो ह्येतद्यजुर्धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानायेत्येतद्वै विश्वे देवा वैश्वानरा दिशः कृत्वा तास्वेता माशिष माशासत तथैवैतद्यजमानो दिशः कृत्वा तास्वेता माशिष माशास्ते ॥ ६ ॥

तेनैतेनान्तरतश्च बाह्यतश्च करोति। तस्मादेषां लोकाना मन्तरतश्च बाह्यतश्च दिशोऽपरिमित मेतेन करोत्यपरिमिता हि दिशः ॥ ७ ॥

तां प्रादेशमात्री मेवोर्ध्वां करोति। प्रादेशमात्रीं तिरश्चीं प्रादेशमात्रो वै गर्भो विष्णुर्योनिरेषा गर्भसम्मितां तद्योनिं करोति ॥ ८ ॥

सा यदि वर्षीयसी प्रादेशात्स्यात् । एतेन यजुषा ह्रसीयसीं कुर्याद्यदि ह्रसीयस्येतेन वर्षीयसीम् ॥ ९ ॥

स यद्येकः पशुः स्यात् *। एकप्रादेशां कुर्यादथ यदि पञ्च पशवः स्युः पञ्चप्रादेशां कुर्यादिषुमात्रीं वा वीर्यं वा ऽइषुवीर्यसम्मितैव तद्भवति पञ्चप्रादेशा ह स्म ह्येव पुरेषुर्भवति ॥ १० ॥

अथ तिरश्चीꣳ रास्नां पर्यस्यति । दिशो हैव सैतद्देवा इमांल्लोकानुखां † कृत्वा दिग्भिरदृꣳहन् दिग्भिः पर्यतन्वंस्तथैवैतद्यजमान इमांल्लोकानुखां ‡ कृत्वा दिग्भिर्दृꣳहति दिग्भिः परितनोति ॥ ११ ॥

तामुत्तरे विहृतीये पर्यस्यति । अत्र हैषां लोकानामन्ताः समायन्ति तदेवैनांस्तद् दृꣳहति § ॥ १२ ॥

---

* 'स्यात'—इति ग, घ ।

† 'इमाꣳल्लोका०'—इति ग, घ ।

‡ 'इमाꣳल्लोका०'—इति ग, घ ।

§ 'दृꣳहति'—इति ख ।

आदित्यै रास्नासीति । वरुण्या वै यज्ञे रज्जुर्वरुण्या मेवैना मेतद्रास्नां कृत्वा पर्यस्यति * ॥ १३ ॥

अथ चतस्र ऊर्ध्वाः करोति । तूष्णी मेव दिशो हैव ता एतद्वै देवा इमांल्लोकानुखां† कृत्वा दिग्भिः सर्वतो दृंहंस्तथैवैतद्यजमान इमांल्लोकानुखां कृत्वा दिग्भिः सर्वतो दृंहति ॥ १४ ॥

ता एता ऐतथ्यै भवन्ति । एतद्वा ऽएता एता मस्तभ्नुवंस्तथैवैना मेतत् स्तभ्नुवन्ति तद्यदत ऊर्ध्वं तदेतया तिरश्चा दृढ मथ यदतोऽर्वाक्तदेताभिः ॥ १५ ॥

तासा मग्रेषु स्तनानुन्नयन्ति । एतद्वै देवा इमांल्लोकानुखां कृत्वैतैः स्तनैः सर्वान् कामानदुह्रत तथैवैतद्यजमान इमांल्लोकानुखां कृत्वैतैः स्तनैः सर्वान् कामान् दुहे ‡ ॥ १६ ॥

सैषा गौरिव § । इमे वै लोका उखेमे लोका

---

* 'पर्य्यस्यति'—इति ख ।

† 'इमाँल्लोका॰'—इति ग, घ ।

‡ 'दुह्रे'—इति ग, 'दुहे'—इति घ ।

§ 'गौरिव'—इति ग, घ ।

गौस्तस्या ऽएतद्दूधो यैषा तिरश्ची रास्ना सा व्विद्धतीये भवति व्विद्धतीये हि गोदूधः ॥ १७ ॥

तस्यै स्तनानुन्नयति। उधसस्तत् स्तनानुन्नयति सा चतुस्तना भवति चतुस्तना हि गौः * ॥ १८ ॥

ताए हैके द्विस्तनां कुर्व्वन्ति। यथो ऽअष्टस्तनां न तथा कुर्याद्यो वै गोः कनीयस्तनाः पशवो ये भूयस्तना अनुपजीवनीयतरा वा ऽअस्यैते ऽनुपजीवनीयतराए हैनां ते कुर्व्वतेऽयो ह ते न गां कुर्व्वते शुनीं वाविं वा व्वडवां वा तस्मात्तथा न कुर्यात् ॥ १९ ॥

अथास्यै बिल मभिपद्यते। अदितिष्टे बिलं गृभ्णात्विति व्वाग्वा ऽअदितिरेतदा ऽएनां देवाः कृत्वा व्वाचादित्या निरष्ठापयंस्तथैवैना मय मेतत् कृत्वा व्वाचादित्या निष्ठापयति ॥ २० ॥

तां परिगृह्य निदधाति। कृत्वाय सा महीमुखा मिति कृत्वाय सा महती मुखा मित्येतन्

---

* 'गौः'—इति ग, घ।

मृन्मयीं योनि मग्नय ऽइति मृन्मयी ह्येषा योनि-
रग्नेः पुत्रेभ्यः प्रायच्छददितिः श्रपयानित्येतद्वा
ऽएना मदितिः कृत्वा देवेभ्यः पुत्रेभ्यः श्रपणाय
प्रायच्छत्तथैवैना मय मेतत् कृत्वा देवेभ्यः श्रपणाय
प्रयच्छति ॥ २१ ॥

ता हैके तिस्रः कुर्व्वन्ति । त्रयो वा ऽइमे
लोका इमे लोका उखा इति व्वदन्तोऽथो अन्यो
ऽन्यस्यै प्रायश्चित्त्यै यदीतरा भेत्स्यते ऽथेतरस्यां
भरिष्यामो यदीतराथेतरस्या मिति न तथा कुर्याद्यो
वा ऽएष निधिः प्रथमोऽयꣳ स लोको यः पूर्व्वो
ऽन्तरिक्षं तद्य उत्तरो द्यौः साथ यदेतच्चतुर्थं
यजुर्द्दिशो हैव तदेतावद्वा ऽइदꣳ सर्व्वं यावदिमे
च लोका दिशश्च स यदतोऽपाहरेदिति तद्धीनयेद्यदु
वै यज्ञोऽतिरिक्तं क्रियते यजमानस्य तद् द्विषन्तं
भ्रातृव्य मभ्यतिरिच्यते यदु भिद्येत प्रायश्चित्ति-
रुत्तरस्यांस्तद्व्याख्याने ॥ २२ ॥ ७ ॥

॥ इति तृतीयप्रपाठके सप्तमं ब्राह्मणम् [५. २.] ॥

अथोखाया अधस्तात् पर्याप्तमृत्पिण्डादानं विधत्ते— "अथ मृत्पिण्ड मिति। 'निधिः' नाम उखाया अधस्तनम्, तस्मै; 'यावन्तं' पर्याप्तं 'मन्यते' यजमानः, तावन्तम् आददीत। उखाकरणे यजमानः कर्त्ता। तथाच कात्यायनः— "यजमान उखां करोति मृद मादाय मखस्य शिर इति"-इति *। आदाने मन्त्रं विधत्ते— "मखस्य शिरोऽसीतीति †। एतद् यजुर्व्याचष्टे— "यज्ञो वै मख इति। यथा आहवनीयो यज्ञस्य शिरः, अग्न्याधारत्वात्; एवं मृत्पिण्डोऽपि वह्न्याधारत्वात् आहवनीयस्य चीयमानत्वाच्च लक्षणया यज्ञशिर इत्युच्यते ॥ १ ॥

प्रकारान्तरेण स्तोतु मनुवदति— "यद्देवाह मखस्येति। इष्टकाभिश्चीयते इति यत्, तत् एषोऽग्निर्जायते। चयनं नाम जन्मेत्यर्थः। लोके उत्पद्यमानः पुरुषः प्रथमं 'शीर्षतः' शिरःप्रभृतिक एव 'चीयते' जायते। एव मग्निः शीर्षतो जायता मित्यभिप्रायेण "यज्ञस्य शिरोऽसि"-इत्युक्तम्। 'जायाते'-इति जनेः पञ्चमलकारे रूपम् ॥ २ ॥

तत्र प्रथमं मन्त्रं विधत्ते— "सं प्रथयतीति ‡। 'प्रथयति' विस्तारयति। उखा नाम लोकत्रयात्मिकेति स्तुता, तत्र 'निधिः' भूलोकः; उत्तरत्र "द्यौर्ह्येव उद्धिरेवेति श्रवणात् §। उत्तरोत्तरमृत्पिण्डप्रदेशौ अन्तरिक्षद्युलोकात्मकौ; अतो मन्त्रत्रयेऽपि लोकत्रयवाचकानि पदानि विद्यन्ते। यथा,

---

* का० श्रौ० सू० १६. ३ १३ ।
† वा० सं० ११. ५७. २ ।
‡ का० श्रौ० सू० १६. ३ २६ ।
§ एतस्मिन्नेव ब्राह्मणे पञ्चमकण्डिकायां (२६१ पृ० १२पं०) द्रष्टव्यम् ।

निधिवपनमन्त्र एवमाम्नायते—

"वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाऽङ्गिरस्वद् ध्रुवासि पृथिव्यसि धारया मयि प्रजाᳪ रायस्पोषं गौपत्यᳪ सुवीर्यᳪ सजातान् यजमानाय"–इति * ।

अथ मन्त्रार्थः,—'वसवः' नाम भूलोकरक्षका देवाः 'त्वा' त्वाम् उखां भूलोकात्मिकां 'कृण्वन्तु' कुर्वन्तु 'गायत्रेण छन्दसा' सह 'अङ्गिरस्वत्' प्राणवत्, हे उखे ! 'ध्रुवा असि' स्थिरा असि, 'पृथिवी' भूलोकात्मिका च भवसि । "धारया मयि"–इति यजुःशेषेण यजमाने आशिष आशास्ते; यजमानाय मयीतिसप्तमीनिर्देशात् । 'यजमानाय'–इति सप्तम्यर्थे चतुर्थी । 'प्रजा' 'धारय' स्थापय । 'रायस्पोषं' धनपुष्टिम्, 'गौपत्यं' गवां पतित्वम्, 'सुवीर्यं' सुवीराणां कर्म, अथ 'सजातान्' समानोदरे जातान् भ्रातॄनपि । धारयेति सर्वत्र सम्बन्धः ॥

मन्त्रं व्याचष्टे,—"अयं वैव लोको निधिरिति । 'एषः' भूलोकः 'निधिः' उखाया अधस्तनम् । तदेतत् यथा 'वसवोऽकुर्वन्', एवं यद्यपि वसव इति पाठेन भूलोकमेव कृतवान् भवति । ध्रुवासीत्यस्य व्याख्याने स्थिरासीति, तस्य व्याख्यानं प्रतिष्ठितासीति । पृथिव्यसीत्यस्य व्याख्याने पृथिवी ह्येष निधिरिति । निधिर्नामोखाया अधस्तनमिति प्रागुक्तम् † । धारयामीत्यादिना यजमानस्याशीराशासनम् ॥

उत्तरत्रोखाया ऊर्द्ध्वपरिमाणं वक्ष्यते ‡, अत्र निधेस्तिर्यग्-

* वा० सं० ११. ५८. १ ।

† प्रथमकाण्डीयाख्याने ( २६७ पृ० २ पं० ) द्रष्टव्यम् ।

‡ अष्टमकाण्डीदद्रष्टव्यम् ( २४२ पृ० १६ पं० ) ।

विस्तारस्य परिमाणं विधत्ते— "तां प्रादेशमात्रीं मिनोति। 'तां' निधिं पर्याप्तां मृदं तिर्यक् 'प्रादेशमात्रीं कृत्वा' 'अथ' अनन्तरम् 'अस्यै' अस्याः विस्तारितायाः निधेर्मृदः 'सर्वतः' 'तीरम्' अन्तम् 'उन्नयति' ऊर्द्ध्वं कुर्यात्। तथाच सूत्रम्— "वसवस्त्वेति प्रथयित्वान्तानुन्नीय सर्वतः"—इति * ॥ २ ॥

अथ तिर्यक् प्रादेशमात्रं विस्तारितायाः निधिमृदः उपरि मृत्पिण्डप्रक्षेपमन्त्रं विधत्ते— "अथ पूर्वं मुद्धिमादधातीति। 'पूर्वं' प्रथमम्। 'उद्धि'-शब्दो मृत्पिण्डप्रक्षेपवाची। अत एव कात्यायनः— "प्रथमं धातुमादधाति"—इत्युक्तवान् †। धातुशब्द उत्तरोत्तरक्रमेणावस्थानमाह; "त्रिधातुत्वानुपातम्"—इत्यादिप्रयोगदर्शनात् ‡ ॥

अथ द्वितीयमन्त्र एव माम्नायते— "रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वद् ध्रुवास्यन्तरिक्षमसि धारया मयि प्रजाᳪ रायस्पोषं गौपत्यᳪ सुवीर्यᳪ सजातान् यजमानाय"—इति §।

मन्त्रस्यायमर्थः,— हे उखे! त्वां 'रुद्राः' अन्तरिक्षाभिमानिनः 'कृण्वन्तु'। अत्र मन्त्रे 'त्रैष्टुभेन छन्दसा'—इति, 'अन्तरिक्षमसि'—इति च विशेषः। शेषं पूर्ववत्। निधेर्भूलोकात्मकत्वादुपरिनिहितमृत्पिण्डस्यान्तरिक्षलोकात्मकत्वम्। मन्त्रव्याख्यापकं ब्राह्मणमपि पूर्ववत्।

---

* का॰ श्रौ॰ सू॰ १६. ३. २६, २७ क।

† का॰ श्रौ॰ सू॰ १६ ३ २७ ख।

‡ धातुशब्दात्कृत्प्रत्यय एव। प्रथितस्य तत्प्रान्तानुन्नीय ऊर्द्ध्वान् गमयति, धातुं प्रथमपिण्डिकाम्' का॰ श्रौ॰ सू॰ वृ॰।

§ वा॰ सं॰ ११ ५८ २।

"संलिप्येति । तां निषेकपरिनिहितां मृदं 'संलिप्य' सम्भार्य्य 'संश्लष्णां' श्लक्ष्णां स्निग्धां कुर्य्यादित्यर्थः * ॥ ४ ॥

अथ प्रथमोद्देरुपरि अन्यमृत्पिण्डप्रक्षेपं समन्त्रं विधत्ते— "अथोत्तर सुचि मादधातीति † ।

अथ तृतीयमन्त्र एव आम्नायते—

"आदित्यास्त्वा कृण्वन्तु जागतेनच्छन्दसाऽङ्गिरस्वद् ध्रुवासि द्यौरसि धारया मयि प्रजाए रायस्पोषं गौपत्यए सुवीर्यए सजातान् यजमानाय"—इति ‡ ।

अत्र आदित्या द्युलोकाभिमानिनी देवताः त्वां सुखां कुर्वन्तु । अत्र 'जागतेन छन्दसा'—इति, 'द्यौरसि'—इति च विशेषः । शेषं पूर्ववत् । प्रथमोद्देरन्तरिक्षात्मकत्वात् तस्योपरि विहितमृत्पिण्डस्य द्युलोकात्मकत्वम् ॥ ५ ॥

अथ निषेकद्वितयस्य च समीकरणं समन्त्रं विधत्ते— "अथै-तेन चतुर्थेनेति § । उक्तमन्त्रत्रयापेक्षया अस्य यजुषश्चतुर्थत्वम् । 'वैश्वानराः' विश्वनरसम्बन्धिनो 'विश्वेदेवाः' त्वाम् 'आनुष्टुभेन छन्दसा' कुर्वन्ति । "दिशो हैतद्यजुरित्यादेरयमर्थः,— उखाया लोकत्रयात्मकत्वात् 'एतेन' 'यजुषा' समीकरणेन तस्या दिश एव निहितवत्यो भवन्ति ।

सोऽयं चतुर्थो मन्त्रः—

"विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वद्

* का० श्रौ० सू० १६ ३ २८ क ।
† का० श्रौ० सू० १६ ३ २८ ख ।
‡ वा० सं० ११ ५८. २ ।
§ का० श्रौ० सू० १६ ३ २९ ।

ध्रुवासि, दिशोऽसि धारया मयि प्रजाए रायस्पोषं गौपत्यए सुवीर्य्यए सजातान् यजमानाय''–इति * ।

अत्र मन्त्रे 'आनुष्टुभेन छन्दसा'–इति, 'दिशोऽसि'–इति च विशेषः ॥ ६ ॥

पूर्वम् ''अयेतेन चतुर्थेन यजुषा करोमीति क्रियासामान्य मुक्तम्, तद् विशिनष्टि— ''तेनैतेनान्तरतश्च बाह्यतश्चेति । 'अन्तरतः' उखिद्रयस्य मध्यदेशे अपरिमितं छिद्रं कुर्यात्, 'बाह्यतः' अपि निम्नोन्नतत्वपरिहारेण सर्वतः समं कुर्यात् । एतस्य यजुषो दिगात्मकत्वात्, उखायाश्च लोकत्रयात्मकत्वात्, 'एतेन' अन्तरतो बाह्यतश्च समीकरणेन लोकत्रयस्य मध्ये बहिश्च 'अपरिमिता दिशः' निहितवान् भवति ॥ ७ ॥

उखाया ऊर्द्धपरिमाणं विधत्ते— ''तां प्रादेशमात्रीं मिति । एवकारेण परिमाणान्तरनिवृत्तिः । ऊर्द्धं यथा प्रादेशमात्री, तिरश्चीनापि प्रादेशमात्री † । तिर्यक् प्रादेशमात्रीति निधि-प्रथनसमये प्रागुक्तम् ‡ । ऊर्द्धतिर्यक् समा कार्येत्यर्थः ।

तत्परिमाणं प्रशंसति— ''प्रादेशेति । 'योनिं' गर्भसद्मीं ज्ञातवान् भवति । उखाया योनित्वम् अन्याधारत्वात्, अनेव गर्भत्वम् तन्मध्ये संवसर अवस्थानात् ॥ ८ ॥

सर्वयोखा प्रादेशमात्री कर्त्तव्येत्याह— ''सा यदीति । 'यदि' 'सा' उखा 'प्रादेशात्' 'वर्षीयसी' अधिकपरिमाणा 'स्यात्', तर्हि 'एतेन' ''विश्वे त्वा देवाः''–इति 'यजुषा' 'ह्रसीयसीम्' अधि-

* वा० सं० ११. ५८. ३ ।

† का० श्रौ० सू० १६, ३. २४ ।

‡ २६० पृ० १३ पं०, २६६ पृ० १ पं० द्रष्टव्ये ।

कांशं परिहृत्य प्रादेशमात्री मेव कुर्यात् । 'यदि' उखा 'क्रमीयसी' स्यात्, 'एतेन' यजुषा तिर्यग् प्रादेशसम्मिता मेव कुर्यात् ॥ ८ ॥

उखायाः परिमाणं पश्वनुष्ठानापेक्षया विकल्पित मिति दर्शयति— "स यद्येक: पशुः स्यादिति। एकपशुपक्षे एव प्रादेशमात्री उखा कर्त्तव्या; पञ्चपशुपक्षे पञ्चप्रादेशपरिमाणा, इषुमात्री वा कर्त्तव्या। एतत् परिमाणद्वयं तिर्यगपेक्षया; ऊर्द्धपरिमाणं तत्रापि एकप्रादेशमात्रीति। तथा च कात्यायनेन सूत्रितम्— "प्रादेशमात्रीं तिर्यगूर्द्धंच, पञ्चप्रादेशा मिषुमात्रीं वा तिर्यक् पञ्चपशौ"–इति *। तिर्यगेव पञ्चपशुपक्षे परिमाणद्वयम्, ऊर्द्धन्तु एकप्रादेशैवेत्यर्थः ॥ १० ॥

अथोखाया उत्तरभागे वर्त्तिकरणं विधत्ते— "अथ तिरश्ची मिति †। 'पर्यस्यति' परितः सर्वतः कुर्यात्। तां रास्नां दिगात्मना स्तौति— "एतद्वै देवा इत्यादिना। पूर्वं 'देवाः' यथा 'उखां कृत्वा' 'दिग्भिः' दृढा मकुर्वन्, एवं यष्टा वर्त्तिकरणेन दिग्भिरेव मितरां दृढाम् कृतवान् भवति ॥ ११ ॥

रास्नाकरणस्य स्थानं विधत्ते—"तां मुत्तरे विलतीय इति ‡। उखां त्रिधा विभज्य 'उत्तरे' पर्वे 'विलतीये' तृतीयभागादप्यूर्द्धे प्रदेशे उखाकण्ठप्रदेशे वर्त्तिं सर्वतः तिरश्चीनां कुर्यादित्यर्थः ॥ १२ ॥

मन्त्रं विधत्ते— "अदित्यै रास्नासीति §। हे वर्त्ते! 'अदित्यै'

---

* का० श्रौ० सू० १६. ३. २४, २५।
† का० श्रौ० सू० १६. ३. २०।
‡ का० श्रौ० सू० १६. ३. २० स।
§ वा० सं० ११ ५६. १।

प्रदीनाया देवमातुः 'रास्ना' रशना 'असि' 'इति'। रास्ना-पदस्याभिप्रायमाह— "यद्रास्ना वै यज्ञ इति। पाशस्य यद्वयो देवीति प्रागुक्तम् *; रास्ना 'यद्रास्ना' यथार्थत्वात् ॥ १३ ॥

अन्यायतस्रो वर्तीर्विधत्ते— "अथ चतस्र ऊर्ध्वा इति। 'तूष्णीम्'-इति मन्त्रप्रतिषेधः। एताः वर्तयः उखायाश्चतुर्दिशं कार्याः। तथाच सूत्रम्— "ऊर्ध्वास्तूष्णीं प्रतिदिशं चतस्रोऽपरा वर्तीः प्रास्नाः"-इति †। कण्ठगतवर्तिपर्यन्तं प्रतिदिशं चतस्रः तूष्णीं कार्या इत्यर्थः। रास्नाचतुष्टयं दिगात्मना स्तूयते— "दिशो हैव ता इत्यादिना। ऊर्ध्वानां चतसृणां तृतीयोत्तर-कृतरास्नापर्यन्तम् ॥ १४ ॥

तां विधत्ते— "ता एता एतस्यै भवन्तीति। "तथैतत् सर्वमिति। उपरवर्तिकरणेन यतो लोका ऊर्ध्वस्थितं सर्वं दृढं भवति। उखाया लोकत्रयात्मकत्वात् तादर्थ्यं वर्तयः कर्तव्या इति तात्पर्यम् ॥ १५ ॥

अथोर्ध्ववर्तीनां मध्ये स्तनोन्नयनं विधत्ते— "तासां मध्येषु स्तनान्विति ‡। स्तना इव 'स्तनाः', तदाकाराः कुर्यादित्यर्थः। "एतद्वै देवा इत्यादेः कण्डिकाशेषस्यायमर्थः,— पूर्वं देवा लोकत्रयात्मिकां गोरूपां उखां कृत्वा तस्याः अधःस्थानीयायां द्वितीयभागे कृतायास्तिरश्चीनाया रास्नायाः समीपे वर्तिरास्नाग्रेषु चतुरः स्तनान् कृत्वा, तेभ्यः सर्वान् कामान् दुग्धवन्तः,

---

* पुरस्तात् (२ भा० २७२ पृ० ३ पं०) द्रष्टव्यम्।

† का० श्रौ० सू० १६. ३. ३१।

‡ का० श्रौ० सू० १६ ४ १।

तथायं यष्टापि स्वाभिलषितान् कामान् दोग्धुं चतुरः स्तनान् कुर्यादिति । गोदुग्धोऽपि विकृतीयभागे भवति , सापि गोचतुस्तनीति तत्साम्यम् ॥ १६ , १७ , १८ ॥

चतुस्तनपक्षं सिद्धान्तयितुं शाखान्तरानुसारेण पक्षान्तरमनुवदति— "तां हैक इति *। तथाच तैत्तिरीयाः— "द्विस्तनां करोति द्यावापृथिव्योर्दोहाय, चतुस्तनां करोति पशूनां दोहाय , अष्टस्तनां करोति छन्दसां दोहाय"—इति †। द्विस्तनपक्षे एकस्मिन्नेव पार्श्वे क्रियते स्तनद्वयम् , अष्टस्तनपक्षे एकैकस्मिन् पार्श्वे द्वौ द्वाविति। तत्पक्षद्वयं दूषयति— "न तथा कुर्यादिति। 'ये' पशवो 'गोः' पशोरपेक्षया 'कनीयस्तनाः' अल्पस्तनाः , 'ये' च 'भूयस्तनाः' ; अल्पभूयस्त्वे तथापेक्ष्येति मध्यं गोरित्युक्तम्। सा हि चतुस्तना। स्तनचतुष्टयादर्वाक्स्तना भूयस्तना वा ये पशवः , ते 'अनुपजीवनीयाः' अभोग्याः भवन्ति। यदि 'एनाम्' उखां द्विस्तनां अष्टस्तनां वा कुर्यात् , तर्हि अनुपजीवनीयां भोगानर्हामेव कुर्युः, न तु तां भोग्याम्। अभोग्यामेव दर्शयति— "शुनी मिति। अष्टस्तनकरणे 'शुनीं' शुनः स्त्रियम् , द्विस्तनकरणे 'अविं वडवां वा' कृतवन्तो भवन्ति। ता यथा भोग्या न भवन्ति , एवं द्विस्तना अष्टस्तना वा उखा न भोगार्हेति तथाकरणमयुक्त मित्यर्थः ॥ १९ ॥

विधत्ते— "अथास्यै बिल मिति ‡। 'बिलं' कण्ठविवरम्

'अभिपृणति' पूरयति। मन्त्रं विधत्ते— "अदितिष्ट इति *। हे उखे। 'ते' 'बिलम्' अदितिः गृभ्णातु। उपरोधः †। अदितिर्वाग्रूपत्वेन स्तूयते— "वाग् वा अदितिरिति। "निष्ठापयतीति। निष्ठितां परिसमाप्तां करोति ॥ २० ॥

उखानिधानं समन्त्रं विधत्ते— "तां परिगृह्णेति ‡। 'परिगृह्य' दृढां गृहीत्वा निदध्यात् 'ताम्' उखाम्।

मन्त्रस्यायमर्थः,— 'सा' अदितिः 'मही' भूरूपा महती वा 'मृन्मयीं' मृद्विकारभूताम् 'अग्नये' अग्न्यर्थं 'योनिं' स्थानम् उखा 'कृत्वाय' "क्त्वो यक्" § कृत्वा 'पुत्रेभ्यः' श्रपयन्तु, पक्वां कुर्वन्तु इति। अतो हेतोः 'अदितिः स्वपुत्रेभ्यो देवेभ्यः' प्रायच्छदिति सम्बन्धः। श्रपयतेः पञ्चमलकारे रूपम् ॥

मन्त्रं प्रतिपाद्य स्वयं व्याचष्टे— "कृत्वाय सा महीमुखामिति ॥ २१ ॥

उखा एकैव करणीयेति सिद्धान्तयितुं केषाञ्चित् पक्षं सोपपत्तिकमनुवदति— "ता हैके तिस्रः कुर्वन्तीति ¶। 'ताः' उखाः, 'एके' आचार्याः 'तिस्रः' कुर्वन्ति। तत्र युक्तिः— "त्रयो वा इमे लोका इति। उखाः खलु लोकात्मिकाः, 'लोकाः' च 'त्रयः'; अतो लोकसङ्ख्यया उखाः कर्त्तव्याः, 'इति' 'वदन्तः'

---

* वा० सं० ११ ५९, २।
† पा० ८. ३. ३९ सू० १ वा०।
‡ का० श्रौ० सू० १६ ४ ४।
§ पा० सू० ७ १. [illegible]।
‖ वा० सं० ११ ५९ २।
¶ का० श्रौ० सू० १६ ४ ५।

एते तिस्रः कुर्वन्तीति सम्बन्धः। युक्त्यन्तर माह—"अथो अन्योऽन्यस्या इति। यदि एका भिद्येत, तर्हि अन्यस्या मग्निं भरिष्यामः। "यदीतराचेतरस्या मिति। अन्योऽन्योऽन्यस्यै प्रायश्चित्त्यर्थं तिस्र उखाः कर्त्तव्या इत्यर्थः।

तं पक्षं दूषयति—"यो वा एष निधिरित्यादिना। निधिः रेकः, कहिहयश्च, भूर्लोकादि त्रयम्; दिशश्च सर्वं जगत्; न ततोऽतिरिक्त मस्ति। अतो लोकत्रयात्मिकाया मुखायां कृतायाम् *, 'यद्' यदि अन्यदुखाद्वयम् 'उपाहरेत्' सम्पादयेत्, तर्हि 'तत्' लोकादिकम् अति-'रेचयेत्'; 'यद् यज्ञे ऽतिरिक्तं क्रियते', 'तत्' अतिरिक्तं कर्म 'यजमानस्य द्विषन्तम् एवातिरेचितवान् भवति। यतो न्यून मतिरिक्तञ्च कर्मदोषाय मेव; अतो न्यूनाधिकदोषौ परिहार्यौ। तस्मात् लोकत्रयात् दिग्भ्यश्चातिरिक्तस्य वस्तुनः करणं न युक्त मिति तात्पर्यम्।

यद्युखैका स्यात्, सा यदि भिद्येत, तर्हि किं मन्यकरणं तूष्णीं मावस्थानम्? अकरणे च कथ मुख्याग्निधारणम्, असत्यग्निधारणे कथं चयनाख्यं कर्म सेत्स्यतीत्याशङ्क्य, तस्य सर्वस्योत्तरं ब्राह्मणे वक्ष्यत इत्याह— "यदु भिन्नायै प्रायश्चित्तिः, उत्तरस्मिन् तदन्वाख्यान इति। 'अन्वाख्याने' ब्राह्मणे

* 'अथोखा मासते द्यौरसि पृथिव्यसीति। उपस्तौत्येवैना मेतन्महयत्येव यदाह द्यौरसि पृथिव्यसीति"—इत्येतस्य सायणीयं भाष्य मिदम्— 'अध्वर्योः समन्त्रकां स्थाल्यादान विधत्ते— "अथोखा मिति। उखाया द्युपृथिव्यात्मकत्वस्य कदाचिदप्यसम्भवात् उपस्तुतिमात्र मिद मित्याह— "उपस्तौत्येवेति। साऽपि किमर्थमत आह— "महयत्येवेति। स्तुत्या पूजनं लोके प्रसिद्धम्"—इति १ भा० ४७० पृ० १पं०

तत् , वपास इति । तत्र श्रौतम्— "यद्येवोखा भिद्येत, याभिन्ना तया स्यादुखविनी स्यात् , तस्या मेनं पर्यावपेत्"— इत्यादि * ॥ २२ ॥ ७ [ ५. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥

॥ इति षष्ठकाण्डे तृतीयः प्रपाठकः समाप्तः † ॥

---

* उत्तरत्र ( ६ अ० ४ ब्रा० ८ क० ) द्रष्टव्यम् ।

† एतदुत्तरं लिख्तं 'कण्डिकाः ११४'—इति क, 'कण्डिकासंख्या ११४'—इति ख, ग, घ । तत्र १ ब्रा० २६ क०, २ ब्रा० १२ क०, ३ ब्रा० १० क०, ४ ब्रा० १० क०, ५ ब्रा० २२ क०, ६ ब्रा० ११ क०, ७ ब्रा० २२ क० । एतासां सङ्कलनयास्मिन् प्रपाठके सप्तसु ब्राह्मणेषु ११४ कण्डिकाः सम्पन्ना इति भ्रम् ॥

अथ

चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ,
अपि वा
पञ्चमाध्याये तृतीयं ब्राह्मणम् ।

॥ हरिः ॐ ॥

तस्या एतस्या अषाढां पूर्व्वां करोति । इयं वा ऽअषाढेय मु वा ऽएषां लोकानां प्रथमासृज्यत ता मेतस्या एव मृदः करोत्येषाऽ ह्येव लोकाना मियं महिषी करोति महिषी हीयं तद्येव प्रथमा व्वित्ता सा महिषी ॥ १ ॥

पादमात्री भवति । प्रतिष्ठा वै पाद इय मु वै प्रतिष्ठा ऽनालिखिता भवति विवृद्धीयम्* ॥ २ ॥

अथोखां करोति । इमांस्तल्लोकान् करोत्यथ व्विश्वज्योतिषः करोत्येता देवता ऽअग्निं व्वायु मादित्य मेता ह्येव देवता व्विश्वं ज्योतिस्ता

* 'विवृद्धीयम्'—इति ग, घ ।

एतस्या एव मृदः करोत्येभ्यस्तल्लोकेभ्य एतान् देवान्निर्म्मिमीते यजमानः करोति त्र्यालिखिता भवन्ति त्रिवृतो ह्येते देवा इत्यधिदेवतम् * ॥ ३ ॥

अथाध्यात्मम्। आत्मैवोखा वागषाढा तां पूर्व्वां करोति पुरस्ताद्धीय मात्मनो वाक्ता मेतस्या एव मृदः करोत्यात्मनो ह्येवेयं वागषाढा महिषीं करोति महिषी हि वाक् त्र्यालिखिता भवति त्रेधाविहिता हि वागृचो यजूंषि सामान्यथो यदिदं त्रयं वाचो रूप मुपांश्वु व्यन्तरा मुच्चैः † ॥ ४ ॥

अथोखां करोति। आत्मानं तत् करोत्यथ विश्वज्योतिषः करोति प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजनन मेवैतत् करोति ता एतस्या एव मृदः करोत्यात्मनस्तत् प्रजां निर्मिमीते यजमानः करोति यजमानस्तदात्मनः प्रजां करोत्यनन्तर्हिताः करोत्यनन्तर्हितां तदात्मनः प्रजां करोत्युत्तराः करोत्युत्तरां तदात्मनः प्रजां करोति

* '०दैवतम्'—इति ग, घ।

† 'मुच्चैः'—इति ग, घ।

त्र्यालिखिता भवन्ति त्रिवृद्धिः प्रजातिः पिता माता पुत्रोऽथो गर्भ उल्वं जरायु ॥ ५ ॥

ता एता यजुष्कृतायै करोति । अयजुष्कृतायाऽइतरा निरुक्ता एता भवन्त्यनिरुक्ता इतराः परिमिता एता भवन्त्यपरिमिता इतराः ॥ ६ ॥

प्रजापतिरेषोऽग्निः । उभयम्वेतत् प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्या यजुष्कृतायै करोति यदेवास्य निरुक्तं परिमितꣳ रूपं तदस्य तेन संस्करोत्यथ या अयजुष्कृतायै यदेवास्यानिरुक्त मपरिमितꣳ रूपं तदस्य तेन संस्करोति स ह वा ऽएतꣳ सर्व्वं कृत्स्नं प्रजापतिꣳ संस्करोति य एवं विद्वानेतदेवं करोत्यथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः * ॥ ७ ॥

अथैनां धूपयति । स्नेने न्वेवायो कर्मणः प्रकृततायै यदेव धूपयति शिर एतद्यज्ञस्य यदुखा प्राणो धूमः शीर्षंस्तत् प्राणं दधाति ॥ ८ ॥

अश्वशकेर्धूपयति । प्राजापत्यो वा ऽश्वः

---

* 'प्रायश्चित्तिभ्यः'—इति क , ख ।

प्रजापतिरग्निर्वा वा आत्मानमात्मना छिनत्त्यवद्-
साये तदे शक्तैव राति सर्वं यातयाम तयो ह
नैषाश्वत् छिनत्ति नेतरान् पशून्* ॥ ९ ॥

वसवस्त्वा धूपयन्तु । गायत्रेणच्छन्दसाङ्गि-
रस्वद् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेनच्छन्दसाङ्गिरस्वदा-
दित्यास्त्वा धूपयन्तु जागतेनच्छन्दसाङ्गिरस्वद् विश्वे
त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेनच्छन्दसाङ्गि-
रस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा
धूपयत्वित्येताभिरेवैना एतद्देवताभिर्धूपयति† ॥ १० ॥

सप्ताक्षराणि भवन्ति । सप्त यजूंषि सप्त-
तय्य एता देवताः सप्त शीर्षन् प्राणा यद्वा
ऽपि यद्दु कृत्वः सप्त-सप्त सप्तैव तच्छीर्षण्येव
तत् सप्त प्राणान् दधाति ॥ ११ ॥ १ ॥

॥ इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् [पू. ३.] ॥

---

* 'पशून्'—इति ग, घ।

† अत्र 'गायत्रेणच्छन्दसा' 'त्रैष्टुभेनच्छन्दसा', 'जागतेनच्छन्दसा', 'आनुष्टुभेनच्छन्दसा'—इत्येवं पाठेन भवितव्यम् "हि च"—इति (६. १. ७३) पाणिनिशासनात्, अन्यथैवात्र भंक्तिनेति। पूर्ववाक्येष्व च बोध्यम् (२६०, २६१, २६२पृ०)।

अथ संस्कृताया मृदः सकाशात् उखानिर्माणात् पूर्वं अषाढाख्येष्टकाया निर्माण माह—"तस्या एतस्या अषाढां पूर्वां करोतीति *। 'अषाढां' अषाढलिङ्गकमन्त्रोपधेया मिष्टकाम्। "तद्वानासा मुपधानो मन्त्र इतीष्टकासु लुक् च मतोः"–इति † मतोर्लुक्। 'पूर्वाम्' उखातः पूर्वभाविनीं कुर्यात्। पूर्वभावित्व मर्थवादमुखेन दर्शयति— "इयं वा अषाढेति। 'अषाढा'–इति या अस्ति, सा 'इयम् वै' पृथिवी खलु ; तद्विकारत्वात्। अस्त्वेवम्, प्राथम्ये किं आयात मित्यत आह— "इय मु वा एषां लोकानां प्रथमाऽसृज्यतेति। पृथिव्या इतरलोकापेक्षया प्राथम्यं प्रसिद्धम्। अस्या मृदन्तरप्रकृतित्वप्रसक्तिं वारयति— "ता मेतस्या एवेति। 'एतस्याः' उक्तसंस्कारोपेताया मृदः सकाशादित्यर्थः। तत्रोपपत्ति माह— "एषां ह्येव लोकाना मिय मिति। यतः 'इयम्' 'एषां' प्रसिद्धानां लोकानां सम्बन्धिनी, अत इत्यर्थः। अय मभिप्रायः,— उखाया लोकत्रयात्मकत्वेन प्रतिपादनात् तस्या या प्रकृतिभूता मृत्, तदीयाया एवाषाढाया अपि निर्मितौ सत्येव तदीयत्वं भवतीति।

अस्या उखावद् यजमानकर्तृत्वं प्राप्त मित्याह— "महिषी करोतीति। प्रथमोढा स्त्री महिषी, 'इयम्' इष्टकापि 'हि' यस्मात् 'महिषी'; प्रथमतो निर्माणात्, अतोऽस्यां महिषीकर्तव्यता युक्ता। भवत्वेवं यद्येषां महिषी स्यात्, सैव कुत इत्यत आह— "तद् यैव प्रथमा वित्ता, सा महिषीति। 'वित्ता' लब्धा ॥ १ ॥

---

* का० श्रौ० सू० १६. ४. ६।

† पा० सू० ४. ४. १२५।

कर्त्तव्यतां विधत्ते— "अथ विश्वज्योतिषः करोतीति *। पूर्ववदेतस्मिन्नङ्केऽसंख्येयदुपधेयत्वात् विश्वज्योतिषनाम्न आसां द्रष्टव्यम्। एतासां निर्माण मेवाग्निवाय्वादित्यानां निर्माण मित्याह— "एता देवता अग्निं वायु मादित्य मेता ह्येव देवता विश्वं ज्योतिरिति। 'एता देवताः' इत्यस्य व्याख्यानम्— 'अग्निम्, वायुम्, आदित्यम्'-इति। विश्वज्योतकस्य मन्त्रादीनां प्रसिद्ध मिति 'हि'-शब्दो द्योतयति। पूर्ववदासां सम्पुष्ट्यर्थं संस्कृतमृत्कैव करण मित्याह— "ता एतस्या एव मृदः करोतीति। एतत् प्रशंसति— "एभ्यस्तल्लोकेभ्य एतान् देवान् निर्मिमीत इति। उख्याया लोकत्रयात्मकत्वप्रोक्तत्वात् तदनन्तरं तदीयमृद आसां निर्माण मेव तदधिष्ठातृदेवतानिर्मित मित्यर्थः। "यजमानः करोतीति, "वातानिचिता भवन्तीति † वाक्यद्वयं स्पष्टम्।

देवानां त्रित्वं भूम्यन्तरिक्षद्युस्थानभेदेन, "इष्टकासु तिस्रो विश्वज्योतिषः पृथगुत्तमपाकाभिस्त्रिताः"-इति ‡ सूत्रम्। पृथगुत्तमपाभिधानम्, द्वितीयतृतीयानां क्रमपरिज्ञानार्थम्; तेन क्रमेणोपधानं यथा स्यादिति। "इत्यधिदैवत मिति। 'इति'-शब्दः प्रतिपादितप्रकारवचनः। 'अधिदैवतम्' देवता अधिकृत्य प्रवृत्तम्, उक्त मित्यर्थः ॥ २ ॥

'अथ' अनन्तरम् 'अध्यात्मम्' आत्मानम् अधिकृत्य प्रवर्त्यमानम्, 'उच्यते'-इति शेषः। प्रतिज्ञात मर्थं दर्शयति— "आत्मैवोख्या वागग्निरिति। उख्यायाः प्राधान्यादात्मत्वम्। प्राणा-

* का० श्रौ० सू० १७ ४ ६।
† २७८ पृ० २ पं० द्रष्टव्यम्।
‡ का० श्रौ० सू० १७ ४ ६ (तु शब्दपर्यन्तम्)।

"प्रजापतिरेषोऽग्निरिति। 'एषः' चयनलक्षणः 'अग्निः' 'प्रजापतिः' सर्वभूतात्मको विराट्। 'निरुक्तं' कार्यात्मना स्थितम्, 'अनिरुक्तं' कारणात्मना वर्त्तमानमिति विवेकः। यदिदं निरुक्तानिरुक्तात्मकत्वम् 'उभयम्' अस्ति, तद् इदं प्रजापतिरेव। 'तत्' तथा सति यजुष्कृतीत्यस्यानि प्रजापतेः 'यत् निरुक्तं रूपम्', तत् कार्यात्मकं 'परिमितम्', तत् संस्कृतवान् भवति। अतथा-भूताभिरिष्टकाभिरतथाभूतं प्रजापतेः रूपं संस्करोति। एवं विद्वान् निरुक्तानिरुक्तरूप मुभयं जानन् संस्कर्त्ता भवति।

अवशिष्टाया मृदो विनियोग माह— "अथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्य इति। अवज्ञां कृत्वा यजमान इति शेषः। उपशेते इति 'उपशया' मृदुच्यते *। 'प्रायश्चित्तिभ्यः' उखाभेदपरिहारोपायाः, तदर्थ मित्यर्थः ॥ ७ ॥

यदुक्तं सूत्रकृता— "सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीप्तैरेकैकेन वसवस्त्वेति प्रति मन्त्र मिति †", तदिदं विधाय प्रशंसति— "अथैनां धूपयति श्रेम्ने न्वेवेति। 'श्रेम्ने न्वेव' स्थिरत्वायैव, न केवलं दृष्टार्थम्। 'अथो' अपि च 'कर्मणः' उपाधारभूतस्य चयनस्य वा 'प्रकृततायै' संस्कृतत्वसिद्धये। "यद्देवेत्यादि", धूपनार्थवादः। उखायाः प्राधान्यात् शिरस्त्वाभिधानम्। नासारन्ध्रेण प्राणस्य सञ्चारवत् ० ० ० धूम-तत्सञ्चारदर्शनात् प्राणत्वोपचारः ॥ ८ ॥

"अश्वशकृद्भिर्धूपयतीति। धूपनकर्म चाश्वशकृद्भिरेव भवितव्य मिति नियमे कारण माह— "प्राजापत्यो वा अश्व इत्यादिना।

---

* का० श्रौ० सू० १६ ४ ७।

† का० श्रौ० सू० १६ ४ ८।

द्वारेण * व्याख्येयम्। "विश्वे त्वा देवा वैश्वानरा इति, चतुर्थमन्त्रे † विश्वेषां देवानां सर्वदेवात्मकत्वाद् अनुष्टुभश्च सर्वच्छन्दोरूपत्वात् परस्परसम्बन्धः। विश्वे च ते नराश्च 'विश्वेनराः', तेषां हितकारित्वेन सम्बन्धिनो 'वैश्वानराः'। इन्द्रवरुणविष्णूनां प्रतिनियतच्छन्दःसम्बन्धाभावात् केवला एवाम्नाताः ‡। "एताभिर्देवैना एतद्देवताभिर्धूपयतीति। 'एतत्' एतेन, वस्वादिमन्त्रधूपनेन 'एताभिः' सप्तदेवताभिः § एव धूपनं कारितवान् भवति ॥ १० ॥

सप्तानां मन्त्रदेवतानां यत् सप्तसङ्ख्यासाम्यम्, तत् प्रशंसति— "सप्ताक्षशकानि भवन्तीति। सङ्ख्यागतसप्तत्वेषु नित्यं प्रशंसति— "यद्‌ु वा अपि बहुशत्वः सप्त-सप्तेति। 'उ' अपि च, यदपि तत्र शतशत मेकं सप्तकम्, सप्तगतश्चापरम्, दैवतगतं चान्यत्। एवं 'बहुशत्वः' सप्तसङ्ख्याया आम्नाताया अपि सप्तसङ्ख्यामतिरेकात् त्रिभिः सप्तभिः 'शीर्षण्येव' व्याख्याते यज्ञशिरस्येव 'सप्त प्राणान्' 'दधाति' स्थापयति ॥ ११ ॥ १ [ ५. ३. ]

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥

---

* विशेषतस्तत्र २६६ पृ० द्रष्टव्यम्।

† वा० सं० ११ क०. ४। ‡ वा० सं० ११. क०. ५, ६, ७।

§ वसवः, रुद्राः, आदित्याः, वैश्वानराः, इन्द्रः, वरुणः, विष्णुश्चेति सप्त देवाः वा० सं० ११. क० कण्डिका मान्नाताः।

॥ इतैव पूर्वत्र २६८ पृष्ठतः २७१ पृष्ठान्तं द्रष्टव्यम्।

ऽइति देवानाᳬ हैता मह्ये पत्नीर्देवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽङ्गिरस्वद्दधुस्ताभिरेवैनामेतद्दधाति ता ह ता ओषधय एवौषधयो वै देवानां पत्न्य ओषधिभिर्हीदᳬ सर्व्वᳬ हितमोषधिभिरेवैनामेतद्दधात्यथ व्विश्वज्योतिषा ऽवदधाति तूष्णीमेवाथ पचनमवधायाभीन्द्धे ॥ ४ ॥

धिषणास्त्वा देवीः । व्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वदभीन्धतामुख ऽइति धिषणा हैता मह्ये देवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्थे-ऽङ्गिरस्वदभीन्धिरे ताभिरेवैनामेतदभीन्द्धे सा ह सा व्वागेव व्वाग्वै धिषणा व्वाचा हीदᳬ सर्व्वमिद्धं व्वाचैवैनामेतदभीन्द्धे ऽथैतानि त्रीणि यजूᳬषीक्षमाण एव जपति ॥ ५ ॥

व्वरूत्रीष्ट्वा देवीः । व्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वच्छ्रपयन्तूख ऽइति व्वरूत्रीर्हैता मह्ये देवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽङ्गिरस्वच्छ्रपयाञ्चक्रुस्ताभिरेवैनामेतच्छ्रपयति तानि ह तान्यहोरात्राण्येवाहोरात्राणि वै व्वरूत्रयोऽहोरात्रै-

यदिदꣳ सर्वं हन्त महोरात्रैरेवैना मेतच्छ्रपयति ॥ ६ ॥

ग्नास्त्वा देवीः। विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वत् पचन्तूख ऽइति ग्ना हैता यद्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽङ्गिरस्वत् पेचुस्ताभिरेवैना मेतत् पचति तानि ह तानि छन्दाꣳस्येव छन्दाꣳसि वै ग्नाश्छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति छन्दोभिरेवैना मेतत् पचति ॥ ७ ॥

जनयस्त्वाच्छिन्नपत्रा देवीः। विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वत् पचन्तूख ऽइति जनयो हैता यद्देव्यो ऽच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वत् पेचुस्ताभिरेवैना मेतत् पचति तानि ह तानि नक्षत्राण्येव नक्षत्राणि वै जनयो ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषा मेतानि ज्योतीꣳषि नक्षत्रैरेवैना मेतत् पचति ॥ ८ ॥

स वै खनत्येकेन। अवदधात्येकेनाभीन्धऽए-केन श्रपयत्येकेन द्वाभ्यां पचति तस्माद् द्विः संव्व-त्सरस्यान्नं पच्यते तानि षट् सम्पद्यन्ते षड्ऋतवः

संव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति * ॥ ८ ॥

अथ मित्रस्य चर्षणीधृत इति। मैत्रेण यजुषोपन्याचरति यावत् कियच्चोपन्याचरति न वै मित्रः † कञ्चन हिनस्ति न मित्रं कश्चन हिनस्ति तथो हैष एतां न हिनस्ति नो ऽएत मेषा तां द्विवेवोपवपेद्विवोद्वपेद्दृश्याग्नेयम् ‡ ॥ १० ॥

ताए सावित्रेण यजुषोद्वपति। सविता वै प्रसविता सवितृप्रसूत एवैना मेतदुद्वपति देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्येति सर्व्वं मु च्चैतत् सविता § ॥ ११ ॥

अथैनां मर्यावर्त्तयति। अव्यथमाना पृथिव्या माशा दिश आपृणेत्यव्यथमाना त्वं पृथिव्या माशा दिशो रसेनापूरयेत्येतत् ‖ ॥ १२ ॥

---

* भवति'—इति ख।
† 'मित्र'—इति ग, घ।
‡ '॰ग्नेयम्'—इति ग, घ।
§ सविता'—इति ग, घ।
‖ '॰तत्'—इति ग, घ।

अथैनामुद्यच्छति। उत्थाय बृहती भवेत्यु-
त्थाय ह्रीमे लोका बृहन्त उदु तिष्ठ ध्रुवा त्वमि-
त्युदु तिष्ठ स्थिरा त्वं प्रतिष्ठितेत्येतत् * ॥ १३ ॥

तां परिगृह्य निदधाति। मित्रैतां त उखां
परिददाम्यभित्त्या एषा मा भेदीत्ययं वै वायुर्मित्रो
यो ऽयं पवते तस्मा एवैनामेतत् परिददाति
गुप्त्यै ते हीमे लोका मित्रगुप्तास्तस्मादेषां लोकानां
न किञ्चन मीयते † ॥ १४ ॥

अथैनामाच्छृणत्ति। स्थेम्ने त्वेवाथो कर्मणः
प्रकृततायै यदेवाच्छृणत्ति शिर एतद्यज्ञस्य यदुखा
प्राणः पयः शीर्षंस्तत् प्राणं दधात्यथो योषा
वा उखा योषायां तत् पयो दधाति तस्माद्यो-
षायां पयः ॥ १५ ॥

अजायै पयसाच्छृणत्ति। प्रजापतेर्वै शोका-
दजा समभवत् प्रजापतिरग्निर्नो वा आत्मा-
त्मानं हिनस्त्यहिंसायै यदेवाजाया अजा ह

* 'ऽतत्'—इति ख, ग।
† 'मीयते'—इति क, ख।

सर्व्वा ओषधीरत्ति सर्व्वासा मेवैना मेतदोषधीनाᳫं रसेनाच्छृणत्ति ॥ १६ ॥

व्वसवस्त्वाच्छृन्दन्तु । गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा व्वैश्वानरा आच्छृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदित्येताभिरेवैना मेतद्देवताभिराच्छृणत्ति स वै याभिरेव देवताभिः करोति ताभिर्धूपयति ताभिराच्छृणत्ति यो व्वाव कर्म करोति स एव तस्योपचारं व्वेद तस्माद्याभिरेव देवताभिः करोति ताभिर्धूपयति ताभिराच्छृणत्ति ॥ १७ ॥ २ ॥

॥ इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् [५. ४.] ॥

अथावटे खननं विधत्ते— "अथैनं मध्या खनतीति *। 'एनम्' अवटम् 'अध्या' पृथिव्याम् उखास्थापनार्थं खनेत्। अवटखननं पुरातनसाम्नाभिधानमुखेन प्रशंसति— "एतद्वै देवा अबिभयुरिति। 'एतत्' एतेन वक्ष्यमाणेन खलु 'देवाः' भीताः आसन्; 'नः' अस्माकं सम्बन्धिनम् 'इमम्' उखेष्टकारूपं पदार्थं 'नाष्ट्रा' नाशकारीणि रक्षांसि 'न हन्युः' हननं न

---

* का० श्रौ० सू० १६ ४. ८ ।

कुर्युरिति। यद्वैतदस्ति, 'एतत्' एतेन पूर्वसान्वयः। 'तस्मै' अवयवभूताय उखादिपदार्थाय 'इमां' पृथिवीम् 'एव' 'आत्मानम्' अवयविनम् 'अकुर्वन्'। एवं कुर्वता मभिप्राय माह— "आत्मानं गोप्स्यतीति। यथावयवभूत महं स्वयं रक्षति, तथा रक्षिष्यतीति तेषा माशयः ॥ १ ॥

खनन मनूद्य मन्त्रं विधत्ते— "तं वा अदित्या खनतीति। 'अदित्या' अदितिर्देवतात्मकेन मन्त्रेणेत्यर्थः। अन्वयव्यतिरेकाभ्या मदितिः खनने समर्थेति दर्शयति—"इयं वा अदितिरित्यादिना। येयम् 'अदितिः' देवता, सा 'इयं वै' पृथिवी खलु। आदत्ते सर्वं मित्यदितिरिति व्युत्पत्तेः। स्पष्ट मन्यत्। यथा पादतल-मग्नकण्टकाद्युद्धरणादिषु स्वयं चेत् न हिनस्ति, अन्यश्चेत् हिंस्यात्; एव मिति भावः ॥ २ ॥

मन्त्रं दर्शयति— "अदितिष्ट्वा देवीति *। अस्य अर्थः— हे अवट। 'त्वा' त्वाम् 'अदितिः' अदीना 'देवी' खनतु। कीदृशी? 'विश्वदेव्यावती' विश्वेषां देवानां हितं कर्म विश्व-देव्यम्, तदस्यास्तीति † विश्वदेव्यावती। "मन्त्रे सोमाश्वेन्द्रिय-विश्वदेव्यस्य मतौ"-इति दीर्घः ‡। किं तत्? 'अङ्गिरस्वत्' अङ्गिरसो यथा तथा। कुत्र? 'पृथिव्याः' 'सधस्थे' सहस्थाने उपरीत्यर्थः। 'इति'-शब्दो मन्त्रसमाप्त्यर्थ इति।

"अवटो वै देवतेति। 'एषः अवटः' 'देवता' देवम् अग्निं प्रति साधुः; इष्टकोपकारकत्वात्। अवटखननसाधनम्, उखार्थ-

---

* वा० सं० ११.६१.१।

† पा० सू० ५.२.९४।

‡ पा० सू० ६.३.१३१।

मृत्खननार्थे प्रागाहृता वैणव्यभ्रिरेवेत्याह— "अत्र सा वैणव्यभ्रिरुत्सीदतीति । 'अत्र' अवटखनने यैव पूर्वं युक्ता 'वैणवी' वेणुविकारभूता 'अभ्रिः', 'सा' 'उत्सीदति' विनश्यति, छिन्नप्रयोजना भवतीत्यर्थः । अवटस्य प्रकारविशेष माह— "चतुःस्रक्तिरेव कूपो भवतीति । "चतस्रो वै दिशः"—इत्यर्थवादः स्पष्टः । "अभ्र्या स्रक्त्यं चतुरस्रं खनत्यदितिष्ट्वेति"—इति कात्यायनः * ॥

अथ यदुक्तं सूत्रकृता— "पचनमास्तीर्य यथाहृतम् अवदधाति, देवानांत्वेत्युखां न्युप्ताम्"—इति †, तदिदं विधत्ते— "अथ पचन मिति । पच्यतेऽनेनेति पचनं तृणादिकम्, तत् 'अवधाय' अवटे आस्तीर्य, आदौ निष्पादितत्वात् प्रथमम् 'अषाढाम् एव' तूष्णीं स्थापयेत् ॥ २ ॥

"अथोखा मवदधातीति । यथायुक्तां "देवानां त्वा पत्नीः"—इति ‡ मन्त्रेण यथायुक्तां अवदध्यात् । 'देवीः'-'विश्वदेव्यावतीः'-इत्युभयत्र § "सुपां सुलुक्"—इति ‖ पूर्वसवर्णदीर्घः ॥

मन्त्रं व्याचष्टे— "देवानां हैता अग्र इति । या देवपत्न्यः— इन्द्राणी, अग्नायी, अश्विनी, राट् इत्याद्याः ¶ पुरा उखा मवटे स्थापितवत्यः । अतः अनेन मन्त्रेण ताभिरवस्थापित-

---

* का० श्रौ० सू० १६ । ४ । ८ ।

† का० श्रौ० सू० १६. ४ १०, ११ ।

‡, § "देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वद् दधतु"—इति वा० सं० ११ ६१. ९ ।

‖ पा० सू० ७. १. ३९ ।

¶ ऋ० सं० ४ ७ १८. १ । व्याख्याताश्चैमा निरुक्ते १२. ४ ४६ ।

यात् भवतीत्यर्थः। 'देवपत्नी'-शब्दस्य ओषधयोऽर्थ इति औपपत्तिकं पदम् तेन मन्त्रेणोपधानं प्रशंसति— "ता ह ता ओषधय एवेति। 'ता ह' ताः खलु देवपत्न्यः, 'ताः' 'ओषधय एव'; न त्वन्या इति समस्य निर्वोषध्यात्मना देवपत्नीस्तुतिः। तदोषधीनां निधानशक्तिः कुत इत्यत आह— "ओषधीभिर्हीदं सर्वं हित मिति। व्रीहियवादिरूपाभ्य ओषधीनाम् अस्य जगतो धारकत्वं प्रसिद्धम्।

निर्मोचनमन्त्राणां त्रिसृणामपि समचार्थं विधत्ते—"अथ पयम् मित्यादिना। दीपनं दक्षिणाग्निमेव। "दक्षिणाग्न्य-ग्निना दीपयति धिषणास्त्वेति"-इति * सूत्रम् ॥ ४ ॥

"धिषणास्त्वेति †। मन्त्रस्तु पूर्ववद् व्याख्येयः। "धिषणा हैता मित्यादि ब्राह्मणमपि पूर्ववत्। 'अभीन्धिरे' अभितो दीपयन्तः।

धिषणाशब्दस्य विवक्षितमर्थं ब्रुवन् तस्याः पञ्चमस्येतरयोग्यता-समर्पणाय प्रसिद्धिमाह— "ता ह ता वागेवेति। या सा खलु धिषणा, 'सा' प्रसिद्धा 'वागेव' नान्या; वाचो व्यवहारा-भावे कस्यापि वस्तुनोऽभिव्यक्तेरभावात्। "वाचा हीदं सर्वं मिद्ध मित्युक्तम् ‡ 'इदम्' दीपितं प्रकाशित मित्यर्थः॥

यदुक्तं सूत्रकृता— "वहन्ती ह्येनीयमाना जपतीति §, तदिदं विधत्ते— "यथैतानि त्रीणि यजूंष्युह्यमाना एव जप-तीति। "वहन्तीष्टा", "मा त्वा", "अमयस्त्वा"-इति त्रीणि

* का० श्रौ० सू० १६ ४ १९।

† वा० सं० ११. ६१. ३। ‡ १८० पृ० २१ पं०।

§ का० श्रौ० सू० १६ ४ २४।

'वरूत्रीः' वरूत्रिपयः *। अर्थवादे बहुवचनान्तत्वेन निर्देशात् एकेन श्रपणम् द्वाभ्यां पचनम् यद्यपि वर्ण्यते, तथापि पाकश्रपणयोरग्निकर्तव्यत्वेन तत्स्वानुकूलप्रयत्न मन्तरेण ,स्वकर्तव्याभावात् ईक्षणपूर्वको जप एव कर्त्तव्य इत्येवाभिप्रायः ॥ ५ ॥

प्रथमं यजुरवधाय व्याचष्टे— "वरूत्रीष्ट्वा देवीरिति †।" वरूत्रिशब्दस्याभिप्रेत मर्थं माह— "तानि हेति। 'तानि' एतानि 'अहोरात्राणि'। प्रतिनिर्दिश्यमानाहोरात्रापेक्षया तानीति। वरूत्रीणा महोरात्रनिर्देशात् नपुंसकता, अथवा सामान्यविवक्षया नपुंसकत्वं द्रष्टव्यम्; तानि वरूत्र्याख्यानि कृत्स्नं जगत् श्रपयन्तीति। वरूत्रय इति योऽयं वरूत्रिशब्दस्यावयवार्थः, तस्येतरस्याहोरात्रेषु सद्भावं दर्शयत्युक्तार्थसमर्थनाय— "अहोरात्रैर्हीदं सर्वं वृत मिति। 'अहोरात्रैरेव' 'एनाम्' उखां श्रपयति, यः 'एतत्' एतेन अहोरात्रवाचकवरूत्रिशब्दयुक्तेन यजुषा श्रपयति ॥ ६ ॥

अथ द्वितीयं यजुरनूद्य व्याचष्टे— "ग्नास्त्वा देवीरित्यादिना ‡। यदुक्तं "छन्दांसि वै ग्ना इति §, तदुपपादयति— "छन्दोभिर्हि स्वर्गं लोकं गच्छन्तीति। गच्छन्त्यभियजमानाः स्वर्ग मितिव्युत्पत्तेः छन्दःस्वपि सम्भवादित्यर्थः। "ग्नाः गच्छन्त्येनाः"—इति ‖ निरुक्तम् ॥ ७ ॥

---

* पा० सू० ७ १ ३४। वरूत्रिशब्दो ह्रस्वेकारान्तो दीर्घेकारान्तश्च। वा० सं० ११· ६१, १२·४४, शत० ब्रा० इहैवोभयविधः श्रुतः; तै० सं० तथैव ४, १ ६ १, ५ १· ७ ३ द्रष्टव्यम्।

† वा० सं० ११· ६१· ४। ‡ वा० सं० ११· ६१· ५।

§ पुरस्तात् ( ५ अ० ४ ब्रा० ७ क० ) द्रष्टव्यम्।

‖ निरु० ३· ४ ४। पुनस्तत्रान्यत्र "ग्ना गमनात्"—इति (१०. ४.१०.)।

पतिना धृतः, तथापि किं मात्रेत्यत आह— "यावानग्निर्यावत्यस्य मात्रेति। यावानिति स्वरूपस्येयत्ता, यावतीत्यवयवस्य। "तावद् सत् भवतीति। नैमित्तिकचित्या सह चितीनां मध्यमयानां षट्त्वात् सा मध्यगता उखा चितिद्वारेणाग्नेर्मात्रया समा भवति। चित्यात्मकत्वादग्नेः स्वरूपैकत्वात्। ऋतुषट्संख्यावतोऽवयविनः संवत्सरस्याप्येकत्वाच्च सा मध्यगता उखा संवत्सरद्वारेण यावानग्निर्यावान् तावती भवतीत्यर्थः ॥ ८ ॥

उखायाः समन्त्रकमुपावहरणं विधाय प्रशंसति— "अथ मित्रस्य चर्षणीधृत इति *। "मैत्रेण यजुषोपावहरतीति। लोके 'मित्रः' मित्रभूतः पुमान् 'न' 'कञ्चन' 'हिनस्ति' मित्रत्वादेव; 'मित्रम्' अपि 'न' 'कश्चन' मित्रत्वादेव। 'तथो' तथा च सति मैत्रेण मन्त्रेण नितरामुपचरणीयस्य पुनस्तृणप्रक्षेपाद्युपचारस्योपचारे सति 'एषः' यजमानः 'एताम्' उखां मित्रत्वादेव 'न हिनस्ति'। 'नो' नैव 'एतम्' उपचरन्तं यजमानम् 'एषा' उखा, मा मां दहतीति क्रुद्धा सती न हिनस्ति।

तस्याः प्रक्षेपोत्क्षेपणयोः कालनियममाह— "तां दिवैवोपवपेद्, दिवोद्वपेदिति। उपवापोऽवटे प्रक्षेपः, उद्वापस्तत ऊर्ध्वं नयनम्। "अहर्ह्याग्नेयमिति ॥ १० ॥

अग्नेः सूर्यस्य तेजस एकत्वाभिभावकत्वाभिप्रायेणोद्वापे मन्त्रं विधास्यन् सावित्रमाह— "तां सावित्रेण यजुषोद्वपतीति †।

यजुषोऽयमर्थः ‡— हे उखे! त्वा 'सविता' सर्वस्य प्रेरको

* वा० सं० ११ ६२।
† का० श्रौ० सू० १६ ४ १६।
‡ वा० सं० ११ ६३ १।

देव उद्वपतु। कीदृश ? 'सुपाणि' 'पाणि' पानादिसाधन प्रदेश, शोभनेन तेन युक्त । 'स्वङ्गुरि' शोभनाङ्गुलिक । "वाल्मूलल्घ्वूल मङ्गुलीना वा लो रत्व मापद्यत इति वक्तव्यम्" —इति * विकल्पेन रत्वम् । बाहुर्भुजदण्ड । 'उत' अपि च शक्त्या महत्या युक्त इति शेष । "सर्वं नु ह्येतत् सवितेति । एतत् 'सर्वं' सुपाण्यादिक 'सविता' एव, न देवतान्तर मित्यर्थ । उक्त उद्वपनार्थे † ॥ ११ ॥

यदुक्त सूत्रकृता "उखा सुत्ताना करोति अव्यथमानेति'— इति ‡, तदिद समन्त्रक पर्यावर्त्तन विधत्ते— 'अथैना पर्या वर्त्तयत्यव्यथमानेति § । पर्यावर्त्तन मूर्द्धाभिमुखीकरणम् । हे उखे । 'अव्यथमाना' व्यथा मप्राप्नुवन्ती, 'पृथिव्याम्' अवस्थिता त्वम्, इमा परिव्याप्ता 'आशा' प्राच्यादय, 'दिश' आग्नेयादि विदिशश्च 'आ' सर्वत 'पृण' पूरय। आपृणेत्यस्यार्थ माह— "आपूरयेति । 'एतत्' एव आपृण, यद् वायव्य मस्ति, तदेतदेव न त्वधिक मित्यर्थं ॥ १२ ॥

तस्या गर्त्तादुद्धरण विधत्ते— "अथैना मुद्गृह्णात्युत्थाय बृहती भवेतीति ‖। उद्ग्रहन मूर्द्धधारणम्। हे उखे । पृथि वीत उत्थिता भव, ह्यनुत्थिताया ग्रहन मुपपद्यते । एत

---

* पा० ८ २ १८ सू० २वा० ।

† ३०० पृ० १७प० उद्ध नयन मिति। "उद्वपति भस्मीभूत पराकरोति"—इति भाष्ये महीधर ।

‡ का० श्रौ० सू० १६ ४ २० ।

§ वा० स ११ ६३ २।

‖ का० श्रौ० सू० १६ ४ २१ ।

मन्त्रभागं * व्याचष्टे— "उत्थाय हीमे लोका बृहन्त इति । उखाया लोकत्रयात्मकत्वेन प्राशस्त्यात् 'उत्थाय' ऊर्द्धमवस्थित्य, बहिरिमे त्रयो लोका 'बृहन्तः' अधिकपरिमाणा दृश्यन्त इत्यभिप्रायः । "उदु तिष्ठेति द्वितीयभागे ध्रुवशब्दस्य स्थैर्यम् अर्थ इति व्याचष्टे— "उदु तिष्ठ स्थिरा त्वं प्रतिष्ठितेतीति । 'एतत्' * उपरिस्थापितायाः ॥ १३ ॥

क्षीरसेचनार्थं पात्रे स्थापनं विधत्ते— "तां परिददातीति । 'निदधाति' स्थापयति, 'पात्रे'-इति शेषः । तथाच कात्यायनः— "परिग्टह्य पात्रे करोति मित्रैतां त इति"-इति † । हे 'मित्र !' देव ! वायो ! 'एताम्' उखां 'ते' तुभ्यम् 'परिददामि' ; परिदानं रक्षणार्थं दानम् । 'अभित्त्यै' अभेदनाय 'एषा' उखा 'मा भेत्' भिन्ना मा भूत् 'इति ‡ । मित्रशब्दस्यात्र समीहितमर्थमाह— "अयं वै वायुर्मित्र इति । 'योऽयं पवते' सततं वाति । पवतिर्गतिकर्मा § । "ते हीमे लोका मित्रगुप्ता इति । लोकत्रयात्मकोखापरिदानेनेदानीं अपि त्रयो लोका वायुना गुप्ता रक्षिता अविचलिता वर्त्तन्ते । 'तस्मात्' 'एषां लोकानां' मध्ये 'न किञ्चन' 'मीयते' हिंस्यते ॥ १४ ॥

अथ तस्या गुप्तायां पय आसेचनं विधाय स्तौति— "अथैनामाच्छृणत्तीति ‖ । "स्वेन्ने त्वा"-इत्यादिना । 'एनाम्' उखाम्

* वा० सं० ११ ६४ १ ।

† का० श्रौ० सू० १६ ४. २४ ।

‡ वा० सं० ११. ६४ २ ।

§ निघ० २ १४. १०८ द्रष्टव्यम् ।

‖ का० श्रौ० सू० १६ ४. २३ ।

'आच्छृणत्ति' आसिञ्चति । गतमन्यत् । प्रकारान्तरेण प्रशंसति— "यद्वेवाच्छृणत्ति, शिर एतद् यज्ञस्य यदुखेति । प्राधान्याद् उखायाः शिरोऽत्वव्यवहारः । पयसो बलकरत्वात् प्राणत्वव्यपदेशः । पयोयोग्यत्वं स्त्रियां लोकप्रसिद्ध्या समर्थ्यते— "योषा वा उखेति । स्त्रीलिङ्गत्वादुखाया योषात्वम् पयसः रेतोवर्द्धकत्वात् रेतस्त्वं प्रसिद्धम् ॥ १५ ॥

विधाय स्तौति— "अजायै पयसाच्छृणत्तीति * । प्रजापतेः शोकादजासम्भूतिराख्यानान्तराद् द्रष्टव्या ; चीयमानस्याग्नेः प्राजापत्यात्मकत्वं प्रागुक्तम् । प्रजापतिरग्निः, प्रकारान्तरेण स्तौति— "यद्वेवाजाया इति । 'यत्' 'उ' अपि च 'अजायाः' पयो भवतीति शेषः । स्पष्टमन्यत् ॥ १६ ॥

तत्र मन्त्रमाह— "वसवस्त्वाच्छृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वदित्यादिना † । हे उखे ! त्वां 'वसवः' देवा अष्टसङ्ख्याकाः, 'अङ्गिरस्वद्' अङ्गिरस इव 'आच्छृन्दन्तु' आसिञ्चन्तु । कीदृशाः ? 'गायत्रेण छन्दसा' सहिताः ; अष्टसङ्ख्या वसूनां गायत्रच्छन्दस्सम्बन्धे हारः ।

एवमुत्तरत्र मन्त्रा अपि व्याख्येयाः ।

विश्वेषां नराणां हिता 'वैश्वानराः' ते, सर्वे देवाः । "अजापयसाऽऽसिञ्चति वसवस्त्वेति प्रतिमन्त्रम्"–इति हि सूत्रम् ‡ ॥

अत्रासेचनमन्त्रेषु वस्वादयः प्रतिपाद्याः, निर्माणमन्त्रेषु, धूपनमन्त्रेषु च । अतो यद् देवतैक्यं तत् प्रशंसति— "स वै याभिरेव देवताभिः करोति, ताभिर्धूपयति, ताभिराच्छृण-

---

† वा० सं० ११. ६५. १—४ ।

*, ‡ का० श्रौ० सू० १६ ४. २२ ।

क्षोति *। "यो वाव कर्म करोति, स एव तस्योपचारं वेदेति। यथा लोके तक्षादिः प्रासादनिर्माणादि 'कर्म करोति', 'स एव' तद्व्याप्यम् 'उपचारं' शङ्कुं प्रति दार्वादिस्थापनलक्षण मुपचार-जातं 'जानाति'; अतो युक्तम्, येनैव छन्नम्, तेनैव धूपना-वेषनोपचारण मित्यर्थः ॥ १७ ॥ २ [ ५. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ५ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
रत्नाभ्वीम् पञ्चसीरीं स्त्रिदशतरुलताधेनुपीयर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यः,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं क्षपावान् गुडकृत मजडो राजतं राजपूज्यः।

---

* "यावद्धाचरेत"—इति का० श्रौ० सू० १६ ४. १६। यावद्भिः प्रकारैः अमर्यां प्रदिपेत् तावद्धानैनैव मन्त्रेणाचरेत। आचरणं च मपणप्रक्षेपः। "दिवैत प्रदहनोद्धरणे (१६. ४ १७.) कर्त्तव्ये। प्रद-हनं पचनम्, उद्धरणं वहिर्निष्कासनम् ॥

याम्यीत्ये प्राण्यजन्मा लवणज मन्त्रणः शार्करं धार्मतेजाः,
एमाद्यौ रजरूपं गिरिं मकुत मुदा पात्रसाविष्टपायैः ॥ ७ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

* छायान्तादौपन्य. पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः ।

च्चरेति *। "यो वाव कर्म करोति, स एव तस्योपचारं वेदेति। यथा लोके तक्षादिः प्रासादनिर्माणादि 'कर्म करोति', 'स एव' तद्वाव्यर्थम् 'उपचारं' गृहं प्रति दार्वादिस्थापनलक्षण मुपचार-जातं 'जानाति'; अतो युक्तम्, येनैव छन्नम्, तेनैव धूपना-वेधनोपचारस्य मित्यर्थः ॥ १७ ॥ २ [५. ४.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ५ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरीं त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां हस्तिवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यः,
व्याप्तार्थी विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलमय मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।

---

* "यावद्वाचरेत्"—इति का० श्रौ० सू० १६. ४ १६। यावद्भिः प्रकारैः अपर्णं प्रतिषेत् तावद्भिरेव मन्त्रैराचरेत्। आचरणं च धूपनप्रक्षेपः। "हिरैव प्रदहनोद्धरणे (१६. ४. १०.) करोति। प्रद-हनं पचनम्, उद्धरणं बहिर्निष्काशनम् ॥

घाञ्योत्थं प्राज्यजन्मा लवणज मन्तृष: शार्करं पार्कतेजा:,
रत्नाढ्यो रत्नरूपं गिरि भजत मुदा पात्रसान्निध्यार्थं: * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥



* घटव्याख्यान्व. पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः ।

( अथ षष्ठाध्याये प्रथमं ब्राह्मणम् । )

भूयाꣳसि हवीꣳषि भवन्ति। अग्निचित्यायां यदु चानग्निचित्याया अतीनि ह कर्माणि सन्ति यान्यन्यत् कर्माति तान्यतीनि तेषा अग्निचित्या राजसूयो व्वाजपेयो ऽश्वमेधस्तद्यत्तान्यन्यानि कर्माण्यति तस्मात्तान्यतीनि ॥ १ ॥

आग्नावैष्णव एकादशकपालः। तदध्वरस्य दीक्षणीयं व्वैश्वानरो द्वादशकपाल आदित्यश्चरुस्ते ऽग्नेः * ॥ २ ॥

स यदाग्नावैष्णवमेव निर्व्वपेत्। नेतरे हविषी ऽअध्वरस्यैव दीक्षणीयं कुर्यात् नाग्नेरथ यदेते ऽएव हविषी निर्व्वपेन्नाग्नावैष्णवमग्नेरेव दीक्षणीयं कुर्यान्नाध्वरस्य ॥ ३ ॥

उभयानि निर्व्वपति। अध्वरस्य चाग्नेश्चोभयꣳ ह्येतत् कर्माध्वरकर्म चाग्निकर्म चाध्वरस्य पूर्व्वं मथाग्नेरुपायि ह्येतत् कर्म यदग्निकर्म † ॥ ४ ॥

* 'अग्नेः'—इति ग, घ।

† '०कर्म'—इति ग, घ।

स य एष आग्नावैष्णवः * । तस्य तदेव ब्राह्मणं यत् पुरश्चरणे व्वैश्वानरो द्वादशकपालो व्वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषा मग्नीना मुपाप्त्यै द्वादशकपालो द्वादश मासाः संव्वत्सरः संव्वत्सरो व्वैश्वानरः † ॥ ५ ॥

यद्वेवैतं व्वैश्वानरं निर्व्वपति । व्वैश्वानरं वा ऽएत मग्निं जनयिष्यन् भवति त मेतत् पुरस्ताद्दीक्षणीयायाः रेतो भूतः सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग् जायते तद्यदेत मत्र व्वैश्वानरः रेतो भूतः सिञ्चति तस्मादेषो ऽमुत्र व्वैश्वानरो जायते ॥ ६ ॥

यद्वेवैते हविषी निर्व्वपति । क्षत्रं वै व्वैश्वानरो व्विडेष आदित्यश्चरुः क्षत्रं च तद्विशं च करोति व्वैश्वानरं पूर्व्वं निर्व्वपति क्षत्रं तत् कृत्वा व्विशं करोति ॥ ७ ॥

एका एष भवति । एकदेवत्य एकस्थं तत् क्षत्र

* 'आग्नावैष्णवः'—इति ग, घ।

† 'वैश्वानरः'—इति ग, घ।

मेकस्माꣳ श्रियं करोति। चरुरितरो बहुदेवत्यो भूमा वाऽएष तण्डुलानां यच्चरुर्भूमो ऽएष देवानां यदादित्या विशि तद्भूमानं दधातीत्यधिदैवतम् * ॥ ८ ॥

अथाध्यात्मꣳ †। शिर एव वैश्वानर आत्मैव आदित्यश्चरुः शिरश्च तदात्मानं च करोति वैश्वानरं पूर्वं निर्वपति शिरस्तत् कृत्वात्मानं करोति ‡ ॥ ९ ॥

एक एष भवति। एकमिव हि शिरश्चरुरितरो बहुदेवत्यो भूमा वा ऽएष तण्डुलानां यच्चरुर्भूमो ऽएषोऽङ्गानां यदात्मांस्तदङ्गानां भूमानं दधाति ॥ १० ॥

घृत एष भवति। घृतभाजना ह्यादित्याः स्वेनैवैनानेतद्भागेन स्वेन रसेन प्रीणात्युपांꣳशवेतानि हवीꣳषि भवन्ति रेतो वा ऽअत्र यज्ञ उपांꣳशु वै रेतः सिच्यते § ॥ ११ ॥

---

* '०दैवतम्'—इति ग, घ।

† 'अथाध्यात्मꣳ'—इति ग, घ। 'अथाध्यात्मꣳ'—इति ङ।

‡ 'करोति'—इति ग, घ। § 'सिच्यते'—इति ख।

अथौद्ग्रभणानि जुहोति। औद्ग्रभणैर्वै देवा आत्मान मस्माल्लोकात् स्वर्गं लोक मभ्युदगृह्णत यदुदगृह्णत तस्मादौद्ग्रभणानि तथैवैतद्यजमान औद्ग्रभणैरेवात्मान मस्माल्लोकात् स्वर्गं लोक मभ्युद्गृह्णीते ॥ १२ ॥

तानि वै भूयांसि भवन्ति। अग्निचित्यायां यद्वु चानग्निचित्यायां तस्योक्तो बन्धुरुभयानि भवन्ति तस्योक्तोऽध्वरस्य पूर्वाण्यथाग्नेस्तस्यो ऽप-वोक्तः * ॥ १३ ॥

पञ्चाध्वरस्य जुहोति। पाङ्क्तो यज्ञो यावान्यज्ञो यावत्यस्य मात्रा तावतैवैन मेतद्रेतो भूतं सिञ्चति सप्ताग्नेः सप्तचितिकोऽग्निः सप्तऽर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतद्रेतो भूतं सिञ्चति तान्युभयानि द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ १४ ॥

स जुहोति। आकूति मग्निं प्रयुजं स्वा-

---

* 'उपोक्तः'—इति क, ख।

हैत्याकूताद्वा ऽएतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १५ ॥

मनो मेधा मग्निं प्रयुजऽ स्वाहेति। मनसो वा ऽएतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १६ ॥

चित्तं विज्ञात मग्निं प्रयुजऽ स्वाहेति। चित्ताद्वा ऽएतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १७ ॥

व्वाचो व्विधृति मग्निं प्रयुजऽ स्वाहेति। व्वाचो वा ऽएतदग्रे कर्म समभवत्ता मेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १८ ॥

प्रजापतये मनवे स्वाहेति। प्रजापतिर्व्वै मनुः स हीदꣳ सर्व्वं ममनुत प्रजापतिर्व्वा ऽएतदग्रे कर्माकरोत्त मेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १९ ॥

अग्नये व्वैश्वानराय स्वाहेति। संव्वत्सरो वा ऽअग्निर्व्वैश्वानरः संव्वत्सरो वा ऽएतदग्रे कर्माकरोत्त मेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ २० ॥

अथ सावित्रीं जुहोति। सविता वा ऽएतदग्रे

कर्माकरोत्तमेवैतदेतस्मै कर्मणे प्रयुङ्क्ते विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम्* विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहेति यो देवस्य सवितुः सख्यं वृणीते स द्युम्नं च पुष्टिं च वृणीतऽएष वा ऽअस्य सख्यं वृणीते यऽएतत् कर्म करोति ॥ २१ ॥

तान्यु हैके उखायामेवैतान्यौदुम्बराणि जुह्वति कामेभ्यो वा ऽएतानि हूयन्त ऽआत्मो ऽएष यजमानस्य यदुखात्मन्यजमानस्य सर्वान् कामान् प्रतिष्ठापयाम इति न तथा कुर्यादेतस्य वै यज्ञस्य संस्थितस्यैतासामाहुतीनां यो रसस्तदेतदर्चिर्यद्धूयते तद्यत्संस्थिते यज्ञे हुत्वौदुम्बरीपूर्वां प्रवृणक्ति तदेनानेव यज्ञ आरोहति तं यज्ञं बिभर्ति तस्मात्संस्थित ऽएव यज्ञे हुत्वौदुम्बरीपूर्वां प्रवृञ्ज्यात् ॥ २२ ॥

मुञ्जकुलायेनावस्तीर्णा भवति । आदीप्यादिति न्वेव यद्वेव । मुञ्जकुलायेन योनिर्वाऽएषाग्नेर्यन्मुञ्जो

---

* 'सख्यम्'—इति म, च।

न वै योनिर्गर्भꣳ हिनस्त्यहिꣳसायै योनेर्वै जायमानो जायते योनेर्जायमानो जायाता ऽइति ॥ २३ ॥

शणकुलायं मन्तरं भवति । आदीप्यादिति न्वेव यद्वेव शणकुलायं प्रजापतिर्यैषा योनिरसृज्यत तस्या ऽउ एमा उल्बं मासञ्छणा जरायु तस्मात्ते पूतयो जरायु हि ते न वै जरायु गर्भꣳ हिनस्त्यहिꣳसायै जरायुणो वै जायमानो जायते जरायुणो जायमानो जायाता ऽइति ॥ २४ ॥ ३ ॥

॥ इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् [६. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पूर्वस्मिन्नध्याये उखासम्भरणं सपादा विश्वज्योतिर्नामाद्येष्टकानां निर्वर्तनं मुक्तम्, अथ षष्ठे दीक्षणीयाद्युखाभेदनप्रायश्चित्तान्तः प्रयोग उच्यते। तत्र प्राकृतीं मात्रां वैश्वदेवीष्टिं, वैकृतीं वैश्वानरद्वादशकपालेष्टिं सादित्यां विधास्यन्नुपोद्घातयति — "भूयांसि हवींषि भवन्त्यग्निचित्याया मित्यादिना। भूयसा हविषा सङ्ग्राह्ययोग्यत्वाभिधानाय अशीतिकर्मत्वं प्रवक्तुं प्रतिजानीते — "अशीतीनि ह कर्माणि सन्तीति। तेषां स्वरूप-

दर्शनमित्यस्य मसहमानोऽग्निकर्मशब्द नावबिभर्त्ति— "यान्यन्यत् कर्माणि तान्यग्नीनीति ॥ १ ॥

इदानीं माग्नावैष्णवादिहवींषि विधत्ते— "आग्नावैष्णव एकादशकपाल इत्यादिना। 'तत्' 'अध्वरस्य' सोमयागस्य 'दीक्षणीय' दीक्षासंस्कारक हवि। 'वैश्वानरो द्वादशकपाल', 'आदित्यश्चरु' च 'ते' एते हविषी 'अग्ने' एव प्राति स्विके * ॥ २ ॥

इत्थ मध्वरचित्याग्न्योर्हविर्व्यवस्था सुस्था उभयविधान्यपि हवींषि कर्त्तव्यानीत्याह— "स यदाग्नावैष्णव मेव निर्वपेदित्यादिना। अध्वरस्य चितेश्चेत्युभयोर्दीक्षणीयत्वसिद्धये उभयानि हवींषि अनुष्ठेयानि, अन्यतरहविषोऽकरणे तत्र स्यादित्यर्थं ॥ ३ ॥

"उभयानि निर्वपतीति। "उभय हि एतत् कर्मेति। 'एतत्' साग्निचयनसौमिक 'कर्म', 'उभयम्' उभयात्मक खलु। किं तदुभय मिति, तत्राह— "अध्वरकर्म चाग्निकर्म चेति। तत्र पौर्वापर्यस्यानियमप्राप्तौ आह— "अध्वरस्य पूर्व मथाग्ने रिति। अग्ने कर्मण प्राथम्य किं न स्यात्? इत्यत आह— "उपाधि ह्येतत् कर्म, यदग्निकर्मेति। 'उप' प्रकृतकर्मण समीपे, तदुपजीव्य, 'एति' आयातीति 'उपाधि' ॥ ४ ॥

प्राकृतस्याग्नावैष्णवस्य प्रयोग किं न व्याख्यायत इत्याशङ्क्य आग्निष्टोमिक ब्राह्मण मतिदिशति— "स य एव आग्ना वैष्णवस्तस्येति। "यत् पुरश्चरण इति। 'पुरः' पूर्व 'चरणम्'

---

* प्रातिस्विक — स्वकीय त्रि० का० ३ १ २२। 'यस्माच्चतुर्थ पर्यन्त शुनासीर्यस्य संवत्सरातिरिक्त प्रातिस्विकः कालो नास्ति — इति का० श्रौ० ५ ११ १ सू० वृत्तौ द्रष्टव्यम्।

अनुष्ठानं यस्मिन्, तत् 'पुरश्चरणम्', प्रातःसवन मग्निष्टोम-कर्मेत्यर्थः। तस्मिन् यद् 'ब्राह्मणम्' उक्तम्, 'तदेव 'तस्य' अग्निचयनस्य; यद्वा 'तस्य' तत्क्रतोरग्न्याधेयस्य *।

अथाग्नेर्दीक्षणीयं हविरनूद्य प्रशंसति— "वैश्वानरो द्वादश-कपालो वैश्वानरो वै सर्वेऽग्नय इति। यो 'वैश्वानरः' चित्यो ख्याप्यमानः, सः 'सर्वेऽग्नयः' चितिरूपाः षडग्नयः; अधि-ष्ठानाधेययोरभेदात्। अथवा विश्वेषां नराणां हितत्वेन सम्बन्धी 'वैश्वानरः' भूमिलोकसाधारणोऽग्निः, स एव 'सर्वेऽग्नयः' भौवैजाठरवैद्युताहवनीयाद्यग्नयः, तेषां सर्वेषा मिव प्राप्तौ वैश्वानराग्निदेवत्यकपालगतसङ्ख्यां प्रशंसति— "द्वादशकपालो द्वादशमासाः संवत्सर इति ॥ ५ ॥

प्रकारान्तरेण पुरोडाशदेवतां प्रशंसति— "यद्वेवैतं वैश्वानर मिति। 'एतं' 'वैश्वानरं' सप्तचित्यात्मकं 'जनयिष्यन्' इष्टकाभिरुत्पादयिष्यन् भवति, अतः 'तम्' 'एतत्' इदानीं 'पुर-स्तात्' उत्पादनात् प्रागेव, 'दीक्षणीयायाम्' एव वैश्वानर-हविःधारणेन 'रेतोभूतं' बीजरूपापन्नं 'सिञ्चति'। अत उभयो-र्निषिक्तव्यजनयितव्ययोर्विलक्षणपरिहाराय आदावपि पुरोडाशो वैश्वानर एव कर्तव्यः। उक्तार्थो लोकसिद्ध इति दर्शयति— "यादृग्वै योनौ रेत इति। प्रतिपादितं सादृश्यं प्रकृते दर्श-यन् पुनर्निगमयति— "तद्यदेत मत्र वैश्वानर मिति। 'तद्यत्' -इत्यत्र तच्छब्दोऽनुवादी यच्छब्देन प्रयुज्यते, 'अत्र' दीक्षा-काले, 'अमुत्र' चयननिष्पत्तिकाले। अथवा, 'अत्र' प्राचीन-

* २भा० २१पृ० (१. ३. १.) द्रष्टव्यम्।

यंशे देशोभूतं विचरति वैश्वानरम्; 'अमुम' सौमित्रे चिति-प्रदेशे जनयति ॥ ६ ॥

अथ वैकृते उभे हविषी समुच्चित्य प्रशंसति— 'यद्वैते हविषी इति। 'एते हविषी' वैश्वानरद्वादशकपालादित्यचर्वाख्ये। "अयं वैश्वानर इति। 'वैश्वानरः' अग्निः, 'अयं' क्षत्रिय-जातिः। तथाच बृहदारण्यकम्— "यान्येतानि देवत्रा क्षत्रा-णीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति" -इति *। आदित्यानां तु अग्निर्वसुभिः, सोमो रुद्रैः, वरुण आदित्यैः"-इत्यादिश्रुतिषु † तृतीयान्तानामुपसर्जनप्रतीतेः तेषां प्रजारूपत्वम्। यद्यपि "विडेष आदित्यश्चरुः"-इति चरोः प्राधान्यं प्रतिभाति, तथापि वैश्यजातित्वयोगात् तच्चितान्ता-यथभूता देवतैवात्र विवक्ष्यते। एवं वैश्वानरवाक्येऽपि। यद्वा, देवताद्वारा द्रव्ययोरप्युक्तजातित्वम्; "एते हविषी भवत इति हविषः प्राधान्यात्। पुरोडाशस्यैकपिण्डत्वेन प्राधान्याच्चैकत्व-मानां तण्डुलानां बहुत्वाद्वा पुरोडाशचर्वोः क्षत्रविड्जातित्वं द्रष्टव्यम्। उभयोरप्यनुष्ठेयत्वाद् अनियमे प्रसक्ते आह— "वैश्वा-नरं पूर्वं निरिति ॥ ७ ॥

पूर्वस्मिन् हविषि द्रव्यस्य देवतायाश्चैकत्वम्, उत्तरस्मिन् तदुभयबहुत्वं च प्रशंसति— "एक एव भवतीत्यादिना। 'एषः' पुरोडाश. 'एको भवति', स च 'एकदेवत्यः'। एक एव देवता

---

* बृ॰ उप॰ १ अ॰ ४ ब्रा॰ ११ क॰।

† "स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुत इति"—इति च बृ॰ उप॰ १अ॰ ४ ब्रा॰ १२ क॰।

यस्य स तथोक्तः । 'तत्' तेन, तथात्वसम्पादनेन 'एकस्य' 'एव' क्षत्रियम्, एक मेव सर्वस्यापि महामण्डलस्य क्षत्रवान् भवति, बहुराजन्यदृष्टत्वात् । फलित मर्थं माह— "एकस्या श्रिय मित्यादि"। श्रिया राजाश्रयत्वनियमात् राज्ञ एकत्व सम्पादनादेव तस्या श्रिय मप्येकस्यां करोति । इत्थं वैश्वानरस्य पुरोडाशस्य च परस्परयोग्यता मभिधाय आदित्यानां चरोश्च सङ्गतत्व माह— "चरुरितरो बहुदेवत्य इति । यत् 'एष' 'तण्डुलानां' 'भूमा वै' बहुत्व खलु । भूमेति पुंलिङ्ग प्रति निर्देश मपेक्ष्य एष इति पुंलिङ्गता । "भूमो एव देवानाम्"- इत्यत्र 'भूमा उ' इति निपातानिपातसमुदाय । शिष्टं स्पष्टम् । प्रकारान्तरेण पुन स्तोतुं सूत्र मर्थं व्यवस्थापयति— "इत्यधि दैवत मिति । "यद्वेवैते हविषी"-इत्युपक्रम्य, "श्रियि तद् भूमानं दधाति"-इत्यन्तेन ग्रन्थसन्दर्भेण प्रतिपादितम् 'अधि दैवतम्' देवता अधिकृत्य प्रवृत्तं सूक्तम् ॥ ८ ॥

"अथाध्यात्म मिति । वक्ष्यते, "शिर एव वैश्वानर, आत्मैव आदित्यचरुरित्यादिना । प्रथम मनुष्ठेयत्वेन प्राधान्यात् एकत्वाच्च साम्यात् 'आदित्यचरु' 'आत्मा' अङ्गप्रत्यङ्गसहित कृत्स्न शरीरम् । शिष्टम् अधिदैवतवाक्यवद् व्याख्येयम् ॥ ९, १० ॥

चरोराश्रयद्रव्य माह— "घृत एष भवतीति । 'घृतभाजना आदित्या'-इति । घृतभागा इत्यर्थं । "तेजो वै घृत मिति * श्रुतेः घृतस्य तेजोद्रव्यत्वात् आदित्याना मपि तथात्वात् ।

---

* तेजो वा एतत् पशूना यद् घृतम्"—इति ऐ० ब्रा० ८. ६ ६ ।
"एतद् वा अग्नेस्तेजो यद् घृतम्"—इति च तै सं० २ ५ २ ७ ।

"आदित्य घृतेन चरुम्"–इत्यादौ * घृतसम्बन्धात्तत्र तेषां तद्भागभाक्त्वम्। 'स्वेनैव भागेन', 'स्वेन रसेन' इति व्याख्यानव्याख्येयभाव। अत्र कात्यायन, उखानिष्पादनानन्तरप्रयोग सुत्राह–"दीक्षामावास्याया मासमावास्येनेष्ट्वा, आग्नावैष्णववैश्वानरौ, इति चतुरादित्येभ्य"–इति †। एवं त्रयाणां हविषां उपांशुधर्मकत्व विधत्ते– "उपांशूत्तमानि हवींषि भवन्तीति। "करणवदशब्द मुपांशु"–इति तल्लक्षणम्। "रेतो वा अत्र यज्ञ इति। 'अत्र' 'अस्मिन् दीक्षासमये क्रियमाणो 'यज्ञः' 'रेतो वै' रेतः खलु। अतः रेतस्त्व युक्त प्राक् ॥ ११ ॥

अथौदग्रभणानि हवींषि विधाय तन्निर्वचनद्वारेण प्रशंसति–"अथौदग्रभणानि जुहोतीति ‡। "औदग्रभणैर्वै देवा आत्मान मिति। 'आत्मान' लिङ्गशरीरोपाधिकं जीवात्मान 'देवाः' 'अस्माद्' भूलोकात् 'स्वर्गं लोकम्' 'अभि' लक्ष्य 'उदगृह्णत' ऊर्ध्वमुख माकर्षेण कृतवन्त। उद्ग्रहणसाधनत्वात् 'औदग्रभणानि' इति नाम सम्पन्नम्। "इष्टहोमं" §। "तथैवैतदिति। दृष्टान्तवद् व्याख्येयम् ॥ १२ ॥

तेषां भूयस्त्व माह– "तानि वै भूयांसीति। 'अनग्निचित्यायाम्' अग्निचयनव्यतिरिक्ताया केवलज्योतिष्टोमादिक्रियाया 'यद्' यान्यत्र हवींषि, ततोऽपि 'भूयांसि' 'अग्निचित्याया' क्रियाया 'भवन्ति'। चयनस्य हविर्भूयस्त्व स्वयमेव वक्ष्यति।

---

* प्र० मा० ३ २ ३ १ द्रष्टव्यम्।
† का० श्रौ० सू० १६ ४ २७, २८, २९।
‡ का० श्रौ० सू० १६ ४ ३० वा०।
§ मा० ८ १ ४२ मू० १ वा०।

हविर्भूयस्त्वार्थवादब्राह्मणं किमिति नोक्तमित्याशङ्कायामाह— "तस्योक्तो बन्धुरिति। 'तस्य' हविर्भूयस्त्वस्य 'बन्धुः' अर्थनिबन्धकोऽर्थवादः 'उक्तः' अध्यायादौ "भूयांसि हवींषि भवन्त्यग्निचित्यायाम्"—इत्यादिना *। आग्निकैः सौमिकानामुभयत्वमाह— "उभयानि भवन्ति तस्योक्त इति। आग्निकानि सौमिकानि च 'उभयानि' भवेयुः, तस्योभयत्वस्य अर्थवाद उक्तो दीक्षणीय हविः प्रस्तावे— "उभयानि निर्वपति अध्वरस्य चाग्नेय"—इत्यादिना †। आध्वरिकाणां पूर्वभावित्वम्, आग्निकानां पश्चाद्भावित्वञ्च विधाय तदर्थवादञ्चातिदिशति— "अध्वरस्य पूर्वाणि, अथाग्नेः, तस्यो एवोक्त इति। "उपाधि ह्येतत् कर्म, यदग्निकर्म"—इत्येव मुक्त इत्यर्थः ‡ ॥ १२ ॥

आध्वरिकाणां पञ्चसङ्ख्यां अनूद्य प्रशंसति— "पञ्चाध्वरस्य जुहोति पाङ्क्तो यज्ञ इति। प्रातरादिसवनानि त्रीणि, प्रायणीयोदयनीयौ द्वौ, इति पञ्चसङ्ख्यायोगाद् 'यज्ञः' 'पाङ्क्तः'। यद्वा, धानाः करम्भः परिवापः पुरोडाशः पयस्या इत्येवं तैत्तिरीयोक्तहविःपञ्चकसङ्ख्यायोगात् पाङ्क्तत्वम् §। हविःपञ्चकत्वनिष्पादने सति 'यज्ञः' सोमयागः 'यावान्' यत्परिमाणः, 'अस्य' 'मात्रा' अन्यथा 'यावती' यत्परिमाणा, 'तावता' तेन कृत्स्नेनापि 'एनम्' उत्पाद्यमानं चयनलक्षणं अग्निं 'रेतोभूतं' बीजरूपे-

---

* पुरस्तात् ६ १ १ (३०६ पृ०) द्रष्टव्यम्।

† पुरस्तादिहैव चतुर्थी कण्डी (३०६ पृ०) द्रष्टव्या।

‡ पुरस्तात् (३०६ पृ० १० पं०) द्रष्टव्यम्।

§ तै० सं० ६. ४. ११. ४, ५, ऐ० ब्रा० २. ३. ६, इह च २ २ १२ मा० भा० द्रष्टव्यम्।

मावस्थितम्, 'एतत्'-इति क्रियाविशेषणम्, क्रियमाणप्रकारेण 'सिञ्चति' निषेकं कृतवान् भवति।

अग्निचयनीयानां सौद्ग्रभणानां सप्तसङ्ख्याकत्वं यदभिभूयस्त्वम् तद् विधाय प्रशंसति— "सप्ताग्नेः सप्तचितिकोऽग्निरित्यादिना। अग्नेः सप्तचितयः इत्थं द्रष्टव्याः— षड् चितयः इष्टकामय्यः, सप्तमी श्रूयते— "विकर्णीं च स्वयमातृण्णाञ्चोपदधाति •—• सा सप्तमी चितिरिति *। शिष्टं पूर्ववत्। मिलितानां सङ्ख्यां अनूद्य प्रशंसति— "तान्युभयानीति। द्वादशमाससंवत्सर एक इति व्याहृतधर्मकाः षट्; ऋतुगतकालसत्त्वं एक इति वा सप्तत्वम् ॥ १४ ॥

सप्तौद्ग्रभणहविषां मन्त्राननूद्य व्याचष्टे— "स जुहोति आकूतिमग्निं प्रयुजं स्वाहेत्यादिना †। 'आकूतिः' आत्मधर्मो मनसः प्रेरणहेतुः। यद्वा, 'आकूतिः' सङ्कल्पः, तदवस्थापन्नम्। 'प्रयुजं' प्रकर्षेण युनक्ति नाडीर्वृत्तिमिति प्रयुक्, तादृशमग्निचयनात्मकविराड्रूपम्। 'स्वाहा' अभिन्नस्य हुतम् अस्तु ‡। "आकूताद्वा एतदग्रे कर्म समभवत्, तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते"-इति। एतत्पूर्वं सङ्कल्पप्रकारेण 'कर्म' चयनाख्यम् 'अग्रे' पुरा 'आकूतात्' प्रकारात् 'समभवत्' सम्पन्नमासीत्, 'तदेव' 'एतत्' इदानीं क्रियमाणप्रकारविशेषम् 'एतस्मै' चयनाख्याय 'कर्मणे' 'प्रयुङ्क्ते' प्रयुक्तवान् भवति। एवमुत्तराण्यपि व्याख्येयानि ॥ १५ ॥

---

* 'विकर्णीञ्च स्वयमातृण्णाञ्चोपदधाति •—• सा सप्तमी चितिः'—इतीहैवोपरिष्टात् ८. १. ४. ६। † का० श्रौ० सू० १६. ४. ३०ख।

‡ "आकूतिमग्निं प्रयुजं स्वाहा"—इति वा० सं० ११. ६६. १।

"मनो मेधा मिति *।" उपर्युपरि व्यापारशीला मनसो वृत्तिर्मेधा, तद्रूपं यत् 'मनः' अस्ति। विमर्शलक्षणं तदात्मकता मापकम् अग्निम्। गतमन्यत्। "मनसो वा एतदग्रे"–इत्यर्थवादोऽपि व्याख्यातप्रायः ॥ १६ ॥

"चित्तं विज्ञात मग्नि मिति †। अनुसन्धानरूपं 'चित्तम्', "अनुसन्धानात्मकं चित्तं विमर्शोऽत्र उच्यते"–इति स्मरणात्। गतमन्यत् ॥ १७ ॥

इत्थं मानसव्यापाररूपस्य मापकस्य अग्नेः प्रतिपादकं होमसाधनं मन्त्रमनूद्य व्याचष्टे— "वाचो विधृति मग्नि मिति ‡। 'वाचो विधृतिः' वचसो विधर्त्री, वाचा नियम्यम्, वायुरूप मापक मित्यर्थः। "वाचो वा इत्यादि, गतम् ॥ १८ ॥

"प्रजापतये मनवे स्वाहेतीति §, पञ्चमो मन्त्रः। तत्र प्रजापतिर्मनोः मेधाधिकरणत्वमङ्गं व्युत्पादयति— "प्रजापतिर्वै मनुरिति। कथं तस्य मनुत्व मिति तत्राह— "स हीदं सर्वं मनुत इति। 'इदं' 'सर्वं' जगत् 'मनुते' अव मित्यवगच्छति; तस्य विराड्रूपत्वात्। "प्रजापतिर्वा एतदग्रे कर्माकरोत्, त मेवैतत्"–इत्यादि स्पष्टम्। 'कर्म' चयनाख्यम् ॥ १९ ॥

"अग्नये वैश्वानराय स्वाहेतीति ‖। अस्मिन् षष्ठमन्त्रे वैश्वानरशब्दं संवत्सरपरतया व्याचष्टे— "संवत्सरो वा अग्नि-

* 'मनो मेधा मग्नि प्रयुजं स्वाहा'—इति वा० सं० ११. ६६. २।
† 'चित्तं विज्ञात मग्नि प्रयुजं स्वाहा'—इति वा० सं० ११. ६६. ३।
‡ 'वाचो विधृति मग्नि प्रयुजं स्वाहा'—इति वा० सं० ११. ६६. ४।
§ 'प्रजापतये मनवे स्वाहा'—इति वा० सं० ११. ६६. ५।
‖ 'अग्नये वैश्वानराय स्वाहा'—इति वा० सं० ११. ६६. ६।

वैश्वानर इति। सवितृप्रदेशे स्थाप्यमानोऽग्निः वैश्वानरः, स च संवत्सरं कृत्वा संवत्सरः *। गतं मन्त्रम् ॥ २० ॥

अथ सप्तमं मन्त्रं मनूद्य व्याचष्टे — "अथ सावित्रीं जुहोति, सविता वा एतदित्यादिना। सविता देवता यस्या ऋचः सा 'सावित्री'; "देवस्य नेतुः"-इतिलिङ्गात्। तन्मन्त्रसाध्या आहुतिरपि सावित्री। "सविता वा एतदित्यादि, व्याख्यातम् ॥

साकल्येन मन्त्रं पठति— "विश्वो देवस्य नेतुरिति †। व्याख्यातोऽयं तृतीयकाण्डे ‡। सवितुः सख्यं लब्धवतो हिरण्यादिवसुधनशरीरतुष्टिश्च सुलभेत्ययमर्थः उत्तरार्धस्य तात्पर्यमित्याह— "यो देवस्य सवितुः सख्यं वृणीते, स द्युम्नं च पुष्टिं च वृणीते"-इति। यद्यपि तत्र द्युम्नवत् पुष्टिशब्दो द्वितीयान्ततया न निर्दिष्टः, तथापि 'पुष्यसे'-इत्यत्र पोषलक्षणं प्रकृत्यर्थं विवक्षित्वा एवं व्याख्यातमिति मन्तव्यम् ॥

अस्तु सख्यं कृतवत् एतत्फलदयं तुष्टसख्यसंस्य भगवता सवित्रा सह सख्यं कथमुपपद्यत इत्यत आह— "एष वा अस्य सख्यं वृणीते, य एतत् कर्म करोतीति। 'यः' पुरुषः 'एतत्' सवितृदेवताकं 'कर्म' 'करोति', 'एषः' खलु 'सख्यं वृणीते' तदीयकर्मसम्पादनमेतत्सख्यलाभहेतुरित्यर्थः। अथ

---

* "सह पित्रा वैश्वानरेणेति। संवत्सरो वै पिता वैश्वानरः प्रजापतिः"—इत्यादि श० ब्रा० ६ का० ४ प्र० २ ब्रा० १६ कं० द्रष्टव्यम्।

† वा० सं० ११. ६७ (४. ८. १.)।

‡ ३प्र० ४ ब्रा० १८, १९ कं० (३भा० ४८, ५५ पृ०) द्रष्टव्यम्।

कात्यायनः— "प्राकृतान्यौद्ग्रभणानि हुत्वा सप्ताग्निकान्याहुति मिति प्रतिपन्नम्"-इति* ॥ २१ ॥

अथैतेषां औद्ग्रभणानां होमविषये केषाञ्चित् पक्ष मनूद्य, तेषा मुपपादनं निराचष्टे—"तान्यु हैके उखायां जुह्वतीत्यादिना† । 'तानि' एतानि औद्ग्रभणानीति सम्बन्धः । 'एके' अध्वर्यवः 'उखायां' तस्यां 'जुह्वति', तेषा मभिप्राय माह— "कामेभ्यो वा एतानीति । काम्यन्त इति कामाः स्वर्गादयः । स्वर्गे प्रत्युद्ग्रहणसाधनत्वात् स्वर्गाख्यः कामस्तावदुक्त एव, एव मन्येऽपि । ततोऽर्वाचीनाः कामा एतेषां विषयः । 'उखा'-इति 'यत्' अस्ति, 'एषः' 'यजमानस्य' 'आत्मा उ' शरीर मेव; शरीरस्योखात्वेन तज्जन्यत्वाद्यजमानकाम्यत्वेन च संस्कारात् । यद्वा, यजमान-शरीरं यथा यज्ञनिर्वर्तनसाधनम्, एव मुखापीति । तर्हि न्यायेन यजमानशरीरस्य मुखायाः । 'आत्मन्' आत्मनि 'यजमानस्य सर्वान् कामान्'-इति स्पष्टम् ॥

अथ तं पक्षं निषिध्य स्व पक्षं सोपपत्तिक माह— "न तथा कुर्यादेतस्य वै यज्ञस्येत्यादिना । 'एतस्य वै यज्ञस्य' प्रकृतस्य दीक्षणीयाख्यस्य 'संस्थितस्य' सम्पूर्णस्य 'एतासां' दीक्षाहुतीनां 'यो रसः', 'तदेतत्' अग्निज्वालारूपः आहवनीयात्मना 'दीप्यते' । तस्मात् उखायाम् औद्ग्रभणहोमपक्षं निराकृत्य हुतेष्वौद्ग्रभ-णेषु तेषां यो रसः स्थितः, तेन प्रज्वलिताग्नौ उखाप्रवृञ्जनं कर्तव्य मिति सिद्धान्तयतोऽस्य अभिप्रायः— सर्वकामावाप्तिस्तु दीक्षणीयाख्ये यज्ञे सम्पूर्णे, हुतेषु औद्ग्रभणेषु तेषां यो रसः

* का० श्रौ० सू० १६. ४. ३० ।
† का० श्रौ० सू० १६. ४. ३१ क ।

यति— "स समिधाज्यस्योपहत्येत्यादिना *। पूर्वस्य समिदाधाने तिष्ठन्नित्युक्तत्वात् † अत्रापि तथात्वप्रसक्तावाह— "आसीन इति। आज्यं समिधा आदाय जुहुयादित्यर्थः। तत्र मन्त्रं दर्शयति— "विश्वकर्मणे स्वाहेतीति ‡।

आज्याहुत्यनन्तरं तत् समिदाधानं समन्त्रकमाह— "अथो-पोत्थाय समिध मितिति §। आज्यहोमस्यासीनत्वाभिधानादुपो-त्थायेत्युक्तम्।

मन्त्रस्यायमर्थः ||,— हे अग्ने। त्वाम् आदित्यादयः 'पुनः' 'समिन्धताम्' दीपयन्तु। तथा 'ब्रह्माणः' ब्राह्मणाः ऋत्वि-गादयः 'समिन्धताम्'। हे 'वसुनीथ।' नीथेति वाङ्नाम, वस्वर्थस्तुत।, यद्वा वस्वर्थं गमयन्। 'यज्ञैः' निमित्तभूतैः 'समि-न्धताम्'। 'त्वं' च 'घृतेन' 'तन्वं' तनुं 'वर्धयस्व'। 'यजमानस्य कामाः' 'सत्याः' अवितथाः 'सन्तु'। "एतास्त्वा देवता इति पूर्वोक्ततात्पर्यप्रदर्शनब्राह्मणं स्पष्टम्। उत्तरार्धं मनूद्य व्याचष्टे— "येभ्य उ त्वा मिति। 'येभ्यः' 'कामेभ्यः' निमित्तभूतेभ्यः 'यज-मान आधत्ते', 'ते सर्वे' अपि कामाः 'सत्याः सन्तु' इति।

---

* "प्रायश्चित्ति' समिधोपहत्याज्य विश्वकर्मणे इति"—इत्येव साधु-पाठः। का० श्रौ० सू० १६ ७ १। इह 'उपपूर्वस्य हन्तेर्ग्रह-णार्थो दृष्टोऽन्यत्रापि (३ ४ १ २५), समिधा करणभूतया स्रुक्-स्थानीयया उपहत्य' गृहीत्वा'—इति च तद्वृत्तौ।

† पुरस्तात् ३४३ पृ० १ पं० द्रष्टव्यम्।

‡ वा० सं० १२ ४३ २।

§ का० श्रौ० सू० १६ ७ २।

|| वा० सं० १२ ४४।

मनुष्यरूपेण यन्तु मर्हत्येतेनैव रूपेणैतद्रूपं बि-
भर्त्ति ॥ ३ ॥

यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । रेतो वा ऽइदꣳ सिक्तमय मग्निस्तेजो व्वीर्यꣳ रुक्मोऽस्मिंस्तद्रेतसि तेजो व्वीर्यं दधाति ॥ ४ ॥

यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । एतद्वै देवा अबिभयुर्यद्वै न इम मिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्मा ऽएत मग्निकाङ्गोप्तार मकुर्व्वन्नमु मेवादित्य मसौ वा ऽआदित्य एष रुक्म स्तथैवास्मा ऽअय मेत मग्निकाङ्गोप्तारं करोति ॥ ५ ॥

कृष्णाजिने निष्यूतो भवति । यज्ञो वै कृष्णाजिनं यज्ञो वा ऽएतं यन्तु मर्हति यज्ञेनैतं देवा अबिभरुर्यज्ञेनैवैत मेतद् बिभर्त्ति लोमतश्छन्दाꣳसि वै लोमानि छन्दाꣳसि वा ऽएतं यन्तु मर्हन्ति छन्दोभिरेतं देवा अबिभरुश्छन्दोभिरेवैन मेतद् बिभर्त्ति ॥ ६ ॥

अभि शुक्लानि च कृष्णानि च लोमानि निष्यूतो भवति । ऋक्सामयोर्हैते रूपे ऽऋक्सामे

सा ऽएतं यन्तु महन्त ऋक्सामाभ्या मेतं देवा अबिभरुरृक्सामाभ्या मेवैन मेतद् विभर्त्ति शाणो रुक्मपाशस्त्रिवृत्तस्योक्तो बन्धुः ॥ ७ ॥

त मुपरिनाभि विभर्त्ति । असौ वा ऽआदित्य एष रुक्म उपरिनाभ्यु वा ऽएषः * ॥ ८ ॥

यद्वेवोपरिनाभि † । अवाग्वै नाभे रेतः प्रजाति-स्तेजो व्वीर्यꣳ रुक्मो नेन्मे रेतः प्रजातिं तेजो व्वी-र्यꣳ रुक्मः प्रदहादिति ॥ ९ ॥

यद्वेवोपरिनाभि ‡ । एतद्वै पशोर्मेध्यतरं यदुपरि-नाभि पुरीषसꣳहिततरं यदवाङ्नाभेस्तद्यदेव पशो-र्मेध्यतरं तेनैन मेतद् विभर्त्ति ॥ १० ॥

यद्वेवोपरिनाभि § । यद्वै प्राणस्यामृत मूर्ध्वं तन्ना-भेरूर्ध्वैः प्राणैरुच्चरत्यथ यन् मर्त्यं पराक्तन्नाभि मत्ये-ति तद्यदेव प्राणस्यामृतं तदेन मेतदभिसम्पादयति तेनैन मेतद् बिभर्त्ति ‖ ॥ ११ ॥

---

* 'एष'—इति ग, घ।

† 'यद्वेवोपरिनाभि'—इति ख। 'यद्वेवोपरिनाभि'—इति ग, घ।

‡ यद्वेवोपरिनाभि'—इति ग। यद्वेवोपरिनाभि'—इति घ।

§ 'यद्वेवोपरिनाभि'—इति ग, घ। ‖ 'बिभर्त्ति'—इति ख।

प्राच्योर्ध्वं प्राच्यजन्मा नवधन मनुजः शार्ङ्गिरं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मखन मुदा पात्रसांनिध्यपार्थः ७ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

---

॥ इति षष्ठकाण्डे चतुर्थः प्रपाठकः समाप्तः † ॥

---

* अन्यत्राप्येवमन्यः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्यः ।

† इतोऽनन्तरमिह क-ग-घ-पुस्तकेषु "कण्डिकासंख्या १००"—इति, अन्यत्र "काण्डौ १००"—इत्येव । तत्र १ ब्रा० ११ क०, २ ब्रा० १७ क०, ३ ब्रा० २४ क०, ४ ब्रा० १६ क०, ५ ब्रा० १७ क०, ६ ब्रा० १५ क०; सङ्कलनया १०० सिद्धम् ॥

अथ

पञ्चमप्रपाठके प्रथमं ब्राह्मणम्,
अपि वा
सप्तमेऽध्याये प्रथमं ब्राह्मणम् ।

॥ हरिः ॐ ॥

रुक्मं प्रतिमुच्य बिभर्त्ति । सत्यᳪ हैतद्यद्रुक्मः सत्यं वा ऽएतं यन्तु मर्हति सत्येनैतं देवा अबिभरुः सत्येनैवेन मेतद् बिभर्त्ति ॥ १ ॥

तद्यत्तत् सत्यम् । असौ स आदित्यः स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरेषोऽमृतᳪ हिरण्य ममृत मेष परिमण्डलो भवति परिमण्डलो ह्येष एकविᳪशतिनिर्बाध एकविᳪशो ह्येष बहिष्टान्निर्बाधं बिभर्त्ति रश्मयो वा ऽएतस्य निर्बाधा बाह्यत ऽ वा ऽएतस्य रश्मयः ॥ २ ॥

यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । असौ वा ऽआदित्य एष रुक्मो नो हैत मग्निं मनुष्यो

अथैनं मासन्द्या बिभर्त्ति। इयं वा ऽआसन्द्यस्याᳪ हीदᳪ सर्व्वं मासन्न मियं वा ऽएतं यन्तु मर्हत्यनयैतं देवा अबिभरुरनयैवैन मेतद् बिभर्त्ति * ॥ १२ ॥

औदुम्बरी भवति। ऊर्ग्वै रस उदुम्बर ऊर्ज्जैवैन मेतद्रसेन बिभर्त्यथो सर्व्वे ऽएते वनस्पतयो यदुदुम्बरः सर्व्वे वा ऽएतं वनस्पतयो यन्तु मर्हन्ति सर्व्वैरेतं वनस्पतिभिर्देवा अबिभरुः सर्व्वैरेवैन मेतद्वनस्पतिभिर्बिभर्त्ति † ॥ १३ ॥

प्रादेशमात्र्यूर्द्ध्वा भवति। प्रादेशमात्रो वै गर्भो विष्णुर्योनिरेषा गर्भसम्मितां तद्योनिं करोत्यरत्निमात्री तिरश्ची बाहुर्वा ऽअरत्निर्बाहुना वै वीर्यं क्रियते वीर्यसम्मितेव तद् भवति वीर्यं वा ऽएतं यन्तु मर्हति वीर्येणैतं देवा अबिभरुर्वीर्येणैवैन मेतद् बिभर्त्ति ‡ ॥ १४ ॥

चतुःस्रक्तयः पादा भवन्ति। चतुःस्रक्तीन्यनूच्यानि चतस्रो वै दिशो दिशो वा ऽएतं यन्तु

*, †, ‡ बिभर्त्ति—इति ख ।

मर्हन्ति दिग्भिरेतं देवा अविभरुर्दिग्भिरेवैन मेतद् विभर्त्ति मौञ्जीभी रज्जुभिर्युता भवति त्रिवृद्विस्तस्योक्तो बन्धर्मृदा दिग्धा तस्यो ऽएवोक्तोऽथो ऽनतिदाहाय * ॥ १५ ॥

अथैनछ् शिक्येन विभर्त्ति। इमे वै लोका एषो ऽग्निर्दिशः शिक्यं दिग्भिर्हीमे लोकाः शक्नुवन्ति स्थातुं यच्छक्नुवन्ति तस्माच्छिक्यं दिग्भिरेवैन मेतद् विभर्त्ति षडुद्यामं भवति षड्ढि दिशो मौञ्जं त्रिवृत् तस्योक्तो बन्धुर्मृदा दिग्धं तस्यो ऽएवोक्तोऽथो ऽनतिदाहाय † ॥ १६ ॥

तस्याप एव प्रतिष्ठा ‡। अप्सु हीमे लोकाः प्रतिष्ठिता आदित्य आसञ्जन मादित्ये हीमे लोका दिग्भिरासक्ताः स यो हैतदेवं व्वेदैतेनैव रूपेणैतद्रूपं विभर्त्ति ॥ १७ ॥

यद्वेवैनछ् शिक्येन विभर्त्ति। संव्वत्सर एषो ऽग्निर्ऋतवः शिक्य मृतुभिर्हि संव्वत्सरः शक्नोति

---

*, † 'ऽनतिदाहाय'—इति ख।

‡ 'प्रतिष्ठा'—इति ग, 'प्रतिष्ठा'—इति घ।

स्यातुं यच्छक्नोति तस्माच्छिक्य ऋतुभिरेवैन मेतद् विभर्त्ति षडुद्यामं भवति षड्ढ्यृतवः ॥ १८ ॥

तस्याहोरात्रे ऽएव प्रतिष्ठा *। अहोरात्रयोर्ह्ययम् संव्वत्सरः प्रतिष्ठितश्चन्द्रमा आसञ्जनं चन्द्रमसि ह्ययम् संव्वत्सर ऋतुभिरासक्तः स यो हैतदेवं व्वेदैतेनैव रूपेणैतद्रूपं विभर्त्ति तस्य ह वा ऽएष संव्वत्सरभृतो भवति य एवं व्वेद संव्वत्सरोपासितो हैव तस्य भवति य एवं न व्वेदेत्यधिदेवतम् † ॥ १९ ॥

अथाध्यात्मम्। आत्मैवाग्निः प्राणाः शिक्यं प्राणैर्ह्ययमात्मा शक्नोति स्यातुं यच्छक्नोति तस्माच्छिक्यं प्राणैरेवैन मेतद् विभर्त्ति षडुद्यामं भवति षड्ढि प्राणाः ‡ ॥ २० ॥

तस्य मन एव प्रतिष्ठा §। मनसि ह्ययमात्मा प्रतिष्ठितो ऽन्न मासञ्जन मन्ने ह्ययमात्मा प्राणै-

* 'प्रतिष्ठा'—इति ग, घ।

† '॰देवतम्'—इति ग, घ।

‡ 'प्राणाः'—इति ग, घ।

§ 'प्रतिष्ठा'—इति ग, घ।

रासतः स यो हैतदेवं व्वेदैतेनैव रूपेणैतद्रूपं विभर्त्ति * ॥ २१ ॥

अथैन मुखया विभर्त्ति । इमे वै लोका उखेमे वा ऽएते लोका यन्तु सर्वंत्वेभिरेतं लोकैर्देवा अविभरुरेभिरेवैन मेतल्लोकैर्बिभर्त्ति † ॥ २२ ॥

सा यदुखा नाम । एतद्दै देवा एतेन कर्मणैतयावृतेमांल्लोकानुदखनन् यदुदखनंस्तस्मादुखोरखा ह वै ता मुखेत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः ‡ ॥ २३ ॥

तदा ऽउखेति द्वे ऽअक्षरे । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद् विभर्त्ति सो ऽएव कुम्भी सा स्थाली तत् षट् षड्ऋतवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति § ॥ २४ ॥

अथैन मिण्ड्वाभ्यां परिगृह्णाति । असौ वा ऽआदित्य एषो ऽग्निरहोरात्रे ऽइण्ड्वे ऽअमुं तदा-

*, † विभर्त्ति—इति ख ।

‡ 'देवाः'—इति ग, घ ।

§ 'भवति—इति ख ।

दित्य महोरात्राभ्यां परिगृह्णाति तस्मादेषोऽहोरात्राभ्यां परिगृहीतः ॥ २५ ॥

यद्वेवैनं मिण्डाभ्यां परिगृह्णाति । असौ वा आदित्य एषोऽग्निरिमा उ लोकाविण्डे अमुं तदादित्य माभ्यां लोकाभ्यां परिगृह्णाति तस्मादेष आभ्यां लोकाभ्यां परिगृहीतः परिमण्डले भवतः परिमण्डलौ हीमौ लोकौ मौञ्जे त्रिवृती तस्योक्तो बन्धुर्मृदा दिग्धे तस्यो एवोक्तोऽथो अनतिदाहाय ॥ २६ ॥

अथातः सम्पदेव * । आसन्दी चोखा च शिक्यञ्च रुक्मपाशश्चाग्निश्च रुक्मश्च तत् षट् षड्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवतीण्डे तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत् तद् भवति † ॥ २७ ॥

अथ सर्व्वसम्पत् । चत्वारः पादाश्चत्वार्यनू-

* 'सम्पदेव'—इति ग, 'सम्पदेव'—इति ख।

† 'भवति'—इति ख।

च्यानि शिक्यं च रुक्मपाशश्च यदु किञ्च रज्ज-व्यं शिक्यं तदनु खाग्नी रुक्मस्तत् त्रयोदश त्रयो-दश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्नि-र्यावत्यस्य मात्रा तावत्तद् भवति * ॥ २८ ॥ १ ॥

॥ इति पञ्चमप्रपाठके प्रथमं ब्राह्मणम् [७. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

यदुक्तं कात्यायनेन— "यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलं निष्कविंशतिपिष्टं कृष्णाजिननिष्यूतं लोमसु शुक्लकृष्णेषु शणसूत्रे त्रिवृत्यो न सुपर्णनाभि बहिर्निष्कं इत्याशी रुक्म इति"—इति †, तदिदं खलु सादौ रुक्मप्रतिमोकं विधत्ते— "रुक्मं प्रतिमुच्य बिभर्तीति । यजमानो रुक्मं सुवर्णमयमाभरणं कण्ठे बध्वा उखां धारयेत् । विहितं रुक्मप्रतिमोचनपूर्वकं धारणं प्रशंसति— "सत्यं हैतद् यद् रुक्म इति । यस्मादग्निसंयोगेऽपि नाशादर्शनात् रुक्मस्य सत्यत्वम् । 'एतम्' अग्निं 'सत्यं' नियन्तुं 'सत्यम्' एव 'अर्हति' । 'देवाः' 'सत्येन' सत्यमाश्रय कृत्वा 'अबिभरुः' भरणमकुर्वन् । 'एतत्' रुक्माख्यं सत्यम् आदित्यात्मना 'सत्येन' 'एव' 'बिभर्ति' ॥ १ ॥

---

* 'भवति'—इति ख ।

† का० श्रौ० सू० १६ । ४ । १ ।

प्रशंसति— "तद्यत्तत्सत्यम् असौ स आदित्य इति। रुक्मस्य सुवर्णमयतां विधाय प्रशंसति— "स हिरण्मयो भवतीति। हिरण्मयस्य भास्वररूपत्वात् ज्योतीरूपत्वम्, तदेव 'अमृतम्' अविनाशि, 'एषः' रुक्मः 'परिमण्डलः' वर्तुलः भवति। तत्रोपपत्तिः— "परिमण्डलो ह्येष इति। 'एषः' आदित्यः 'एकविंशतिनिर्बाधः'। विलम्बिताः पुष्पकाः धारणसमये निर्बाधाः *, यथा बाह्या भवन्ति, तथा धारयेत्। निर्बाधस्य रश्मिभावं प्रशंसति— "रश्मयो वा एतस्य निर्बाधा इति। 'एतस्य' आदित्याकारस्य रुक्मस्य ॥ २ ॥

रुक्मधारणं प्रशंसति— "यद्वेव रुक्मं प्रतिमुञ्चेति। मानुषेण रूपेण अग्नेर्धारणस्यानुचितत्वात् 'एतेन' रुक्माख्येन आदित्येन 'रूपेण' 'एतत्' अग्न्यात्मकं 'रूपं' 'बिभर्ति' ॥ ३ ॥

पुनः प्रकारान्तरेण प्रशंसति— "यद्वेव रुक्मं प्रतिमुञ्चेति। अस्याग्नेः रेतःसेकस्यानीयत्वं पूर्वं प्राक्, रुक्मस्य तेजोरूपं वीर्यम्। तथा सति अग्नौ रुक्मसंयोजनेन रेतस्यग्न्याख्ये 'तेजः' वीर्यमेव स्थापितवान् भवति ॥ ४ ॥

पुनरप्यग्ने रुक्मसंयोग मग्नेर्गोप्तृत्वरूपेण प्रशंसति— "यद्वेव रुक्मं प्रतिमुच्य बिभर्तीति। पुरा 'देवाः' 'इमम्' अग्निम् 'नाष्ट्रा' नाशकानि 'रक्षांसि' 'यद्वै' येनैव प्रकारेण 'न हन्युः', 'एतत्' एतेन विषयभूतेन 'अबिभयुः'। भीतिपरिहारोपायं दर्शयति— "तस्मा एत समितादिति। 'तस्मै' अग्नये 'एतम्' आदित्यम्। एतच्छब्दार्थं माह— "अमु मेवादित्य मिति। तर्हि

* निर्बाधाः, निर्बाधन्ती निष्क्रामन्तो उन्नतात् स्वरूपाद् बहिर्निःसृता भवन्ति'—इति आ० श्री० सू० १६. ५, १ ह० ।

मानुषे कथं गोप्तारं कर्तुं शक्यत इति, तत्राह— "असौ वा आदित्य एष रुक्म इति ॥ ५ ॥

"कृष्णाजिने निष्यूतो भवतीति। नितरां स्यूतः सम्बद्धः भवति। यथा कृष्णाजिनस्योपरि वर्त्तेत, तथा कुर्यादित्यर्थः। "यज्ञो वै कृष्णाजिन मिति। यज्ञसाधनहविराधारत्वात् यज्ञ इत्युच्यते। शिष्टं गतप्रायम्। निष्ठीवन मपि 'लोमतः' लोमप्रदेशे कर्त्तव्यम्। कृष्णाजिनस्य यज्ञत्वविधानात् तल्लोम्नां यज्ञावयवच्छन्दोरूपत्वं युक्तम्। गत मन्यत् ॥ ६ ॥

तत्रापि शुक्लकृष्णलोमरेखयोरुपरि निष्यूतेन भवितव्य मिति दर्शयति— "अभि शुक्लानि च कृष्णानि च लोमानि निष्यूतो भवतीति। उभयविधानां लोम्नाम् 'अभि' उपरि। "ऋक्सामयोर्हैते रूपे इति। 'ह'-शब्दः "ऋक्सामयोः शिल्पे"—इत्यादि * मन्त्रप्रसिद्धिद्योतनार्थः। गत मन्यत्। "शाणो रुक्मपाशस्त्रिवृदिति। रुक्मसम्बन्धनरज्जुः 'शाणः' शणवल्कनिर्मितः, 'त्रिवृत्' त्रिगुणितः। "तस्योक्तो बन्धुरिति। यथार्थवादः— "अपकृत्ताय मन्तर्द्धं भवतीत्यत्रोक्तः †, त्रिवृदर्थवादस्तु "त्रिवृदग्निरित्यादिनोक्तः ‡ ॥ ७ ॥

रुक्मधारणप्रदेशं विधाय प्रशंसति— "त मुपरिनाभि बिभर्त्यसौ वा आदित्य इति। "उपरिनाभ्यु वा एष इति'।" 'एषः'

---

* वा॰ सं॰ ४. ९। "कृष्णाजिनयोः सन्धि मालभत ऋक्सामयोरितीति का॰ श्रौ॰ सू॰ ७ ३ २२। "यद्वै प्रतिरूपं तच्छिल्प मिति चेह पुरस्तात् (३ २ १. ५) द्रष्टव्यम्।

† पुरस्तात् (६ अ॰ १ ब्रा॰ २४ क॰) द्रष्टव्यम्।

‡ पुरस्तात् (१ प्र॰ २ ब्रा॰ १४ क॰) द्रष्टव्यम्।

आदित्यः 'उपरिनाभि' नाभेरुपरिप्रदेशे; तत्र मध्ये ध्येयत्वात्, रश्मयश्च नाभेरुपरि वर्तमानत्वाद् वा, जाठरवह्न्यात्मकस्य तस्य नाभेरुपरि वर्तमानत्वाद् वा ॥ ८ ॥

उक्तमुपरिनाभित्वं बहुधा प्रशंसति— "यदेवोपरिनाभ्यवाग् वै नाभेरित्यादिना। रेतसः 'प्रजातिः' उत्पत्तिः नाभेरवाक्प्रदेशे खलु, अतः 'तेजः' वीर्यरूपः 'रसः' तां 'प्रजातिं' प्रदहेत्, तत् 'नेत्' नेदिष्टम्। "नेत्त्वेव हदिष्यतीत्यसम्प्रयुज्यते परिभये"—इति * निरुक्तम् ॥ ९ ॥

प्रकारान्तरेण प्रशंसति— "यदेवोपरि नाभीति। 'एतद्वै पशोर्मेध्यतरं' यन्नाभेरुपरिष्टाद् वर्तमानं हृदयादिकम्। 'नाभेः' 'अवाङ्' अर्वाक्प्रदेशे 'यत्' अङ्गम्, 'तत्' 'पुरीषसंहिततरम्' अत्यन्तं पुरीषेण संहितम्। "तद्यदेवेत्यादि, स्पष्टम् ॥ १० ॥

उपरिधारणं प्रकारान्तरोपरिधारणतया प्रशंसन् गतिभेदेन मर्त्यामृतविभागमाह— "यद्वेवोपरिनाभि यद्वै प्राणस्येति। प्राणस्य द्वावंशौ, अमृतांशो मर्त्यांशश्च, तत्रामृतांशो योऽंशोऽस्ति नाभेरूर्ध्वप्रदेशे, सः 'ऊर्ध्वः प्राणः' 'उच्चरति' उद्गच्छति; यः मर्त्योऽंशः, सः नाभेः 'पराङ्' अधोमुखं 'तं नाभिम्' 'अत्येति' अतिगच्छति। विभागप्रदर्शनप्रयोजनमाह— "तद्यदेवेति। 'तत्' 'प्राणस्य' 'अमृतम्' अंशम् 'एनम् अभि' आयुष्याग्नेरुपरि 'सम्पादयति'। 'एतत्' एतेन, नाभेरुपरि सम्पादनेन 'एनम्' अग्निम् 'तेन' अमृतेन 'बिभर्त्ति' ॥ ११ ॥

उखाग्नेर्नाभ्युपरि धारणं विधाय तत्राप्यासन्द्या धारणं

---

* निरु० १. २. ६ ।

कर्त्तव्य मित्याह— "अथैन मासन्द्या मिति *। आसन्दीमहत्ता-निमित्तं पृथिव्यां सम्पादयन् तदात्मकत्वसम्पादनद्वारेण प्रशंसति —"इयं वा आसन्दीति । आसीदत्यस्यामग्निरित्यासन्दी, इयं पृथिव्यपि सर्वस्यापि पदार्थस्यासदनयोग्यत्वात् आसन्दी ; तथा च सती अस्या मेव भूतवान् भवतीत्यर्थः । "इयं वा एतं यन्तु मित्यादि", पूर्ववत् ॥ १२ ॥

आसन्द्या औदुम्बरत्वं विधाय प्रशंसति— "औदुम्बरी भवति ऊर्ग्वै रस इति । ऊर्ग्रूपत्वं सर्ववनस्पत्यात्मकत्वञ्च उख्यसमिदाधानप्रस्तावे प्रागुक्तम् †। "सर्वे वा इत्यादि, पूर्ववत् ॥ १३ ॥

ऊर्ध्वप्रमाणं विधाय स्तौति— "प्रादेशमात्रीति । गर्भरूपिणो यजमानस्य विष्णोरेषा आसन्दी अपि तदाधारभूता, अतः प्रादेशप्रमाणां 'योनिं' 'गर्भसम्मितां' गर्भसमपरिमाणां 'करोति' । तिर्यक्प्रमाण माह— "अरत्निमात्रीति । "तिरश्चीति । द्विप्रादेशोऽरत्निः, द्वयोरप्यरत्न्योर्बाहुः । किं तत इत्याह— "बाहुनो वै वीर्यं क्रियत इति । 'बाहुना उ' बाहुनैव । 'तत्' तस्मात् बाहुः 'वीर्यसम्मिता' 'भवति' प्रहारसमये तथा दर्शनात् ॥ १४ ॥

"चतुःस्रक्तय इति । स्रक्तिचतुष्टयोपेताः स्युः, 'अनूच्यानि' अपि चतुर्द्धाराणि स्युः । पादाङ्गेषु आयततिर्यक् काष्ठानि अनूच्यानीत्युच्यन्ते । स्पष्ट मन्यत् । 'त्रिवृद्भिः' त्रिगुणाभिः 'रज्जुभिः' 'व्यूता' विविधं सन्तता । "व्येञ् सन्तुसन्ताने" ‡। "तस्योक्तो बन्धुरिति । मौञ्ज्यर्थवादः, तदाहरणस्यादौ तदाहरणार्थं पशु-

* का० श्रौ० सू० १६ । ५ । २ ।

† पुरस्तात् ६ प्र० २ ब्रा० २ क० (३३७ पृ०) द्रष्टव्यम् ।

‡ धा० उ० १००७ धा० ।

त्रयमग्निरज्जुप्रस्तावे— "ते शीर्षाभिरभिधानीभिरभिहिता भवन्ति, अग्निर्देवेभ्य उदक्रामत् स मुञ्जं प्राविशत्"—इत्यादिनोक्तः *; त्रिवृत्त्वं च "त्रिवृदग्निरित्यत्र— "सैवाग्नेस्त्रिवृत्ता"—इत्युक्तम् †। व्यामन्त्री 'महा दिशा' व्यामिता स्यात्, 'तस्यो' तस्या अपि 'बन्धुः' अग्निप्रस्तावकोऽर्थवाद उक्तः ‡। दृष्टप्रयोजनं च दर्शयति— "अयोऽन्तितदाहायेति ॥ १५ ॥

"पयेन मिति। 'एनम्' उख्याग्निम्। 'शिक्येन बिभर्त्ति' शिक्यवत्या आसन्द्याम् उख्यां बिभर्तीत्यर्थः §। उक्तं तदर्थं तदधिदैवताध्यात्मभेदेन प्रशंसति— "इमे वै लोका एषोऽग्निरित्यादिना। उख्याग्नेर्लोकत्रयात्मकत्वं सुखाबोधं ‖। उख्यायाः लोकत्रयात्मकता "यो वा एष निधिः प्रथमोऽयं स लोकः"—इत्यादिना प्रागुक्ता ¶। तस्या दिशः शिक्यम्। किं तत इत्यत आह— "दिग्भिर्हीमे लोकाः शक्नुवन्ति स्थातु मिति। तस्माच्छिक्येन भरणं युक्तम्। प्रसङ्गाच्छिक्यशब्दनिर्वचनं दर्शयति— "यच्छक्नुवन्ति तस्माच्छिक्य मिति। स्वाधिष्ठितवस्तुधारणसमर्थत्वात्। शिक्यरूपकल्पनायाः प्रयोजनं दर्शयति— "दिग्भिरेवैन मिति। "षडुद्यामं भवतीति। ऊर्ध्वाधोविवक्षया दिशां षट्त्वम्। उद्गतानि दामानि उद्यामानि, तेषां षट्त्वेनोपेतं कर्त्तव्यम्; सुवे

---

* पुरस्तात् २ प्र० ३ ब्रा० २६ का० ( १३८ पृ० ) द्रष्टव्यम्।

† पुरस्तात् १ प्र० ३ ब्रा० १८ क० द्रष्टव्यम्।

‡ २ प्र० १ ब्रा० १ क० ( १०६ पृ० )" द्रष्टव्यम्।

§ का० श्रौ० सू० १६ ५. २।

‖ "त्रयो वा इमे लोकाः"—इत्यादि २६६ पृ० ६ पं० द्रष्टव्यम्।

¶ पुरस्तात् ६. ७ २२ ( २६६ पृ० १० पं० ) द्रष्टव्यम्।

षड्व्याम मिति पठितत्वात् *। यद्वा, उद्यमनसाधनत्वात् उद्याम-शब्देन शिक्यदामान्युच्यन्ते।

पाशानां मौञ्जविहितार्थवादः प्रागुक्तः †, उद्यमनानां मृद्-मयत्वार्थवादोऽपि प्रागुक्तः ‡, इत्यतिदिशति— "तस्यो एवेति। 'तस्य' मृदालेपनस्यापीति ॥ १६ ॥

"तस्याप एव प्रतिष्ठेति। 'तस्य' शिक्यस्य 'आपः' उदकान्येव 'प्रतिष्ठा' आसदम्; लोकसृष्टेः प्राक् उदकस्य सृष्टत्वात्। शिक्यस्याधस्ताद्वर्ती उख्याधारः पाशरचितोऽवयवविशेषः, स एवात्र 'प्रतिष्ठा'-शब्देनोक्तः। "आदित्य आसञ्जन मिति। आसज्यते बध्यते शिक्य मत्रेति 'आसञ्जनम्' शिक्याधारः काष्ठविशेषः। यद्वा, आसज्यत इत्यासञ्जनम्, शिक्यस्योर्ध्वावयवः आदित्यो-ऽत्र तत्स्थानीयः। उक्तार्थं प्रशंसति— "स यो हैतदेवं वेदेति ॥ १७ ॥

प्रकारान्तरेण प्रशंसति— "यद्वेवैनं शिक्येन बिभर्त्तीति। एतत् पूर्वकण्डिकावद् व्याख्येयम्। अग्नेः संवत्सररूपत्वं संव-त्सरभरणात्, शिक्यस्य स्वाश्रिताधारकत्वनियमात् संवत्सरस्याग्नि-रूपत्वेन ऋतूनां संवत्सराधारत्वात् तेषां शिक्यत्वं युक्तम् ॥ १८ ॥

"तस्याहोरात्रे एव प्रतिष्ठेति। "चन्द्रमा आसञ्जन मिति। चन्द्रमसहृदुपध्यायनत्वात् संवत्सरस्य चन्द्रासञ्जनरूपत्वम्। संव-त्सरात्मकत्वप्रयुक्त मर्थवाद माह— "तस्य ह वा एष संवत्सरभृत

---

* "शिक्यपाशं प्रतिमुञ्चते षड्व्यामं विश्वा रूपाणीति"—इति का० श्रौ० सू० १६ ५. ६।

† पुरस्तात् ३८४ पृ० टीप्पनीद्वयं (*, †) द्रष्टव्यम्।

‡ पुरस्तात् ३७५ पृ० ३ पं० द्रष्टव्यम्।

इति । 'यः' 'एवम्' अग्नेः संवत्सरात्मकत्वम्, शिक्यस्य ऋतुत्वात्मकतां च 'वेद' जानीयात्, 'तस्य' 'एषः' उख्योऽग्निः 'संवत्सरभृतः' संवत्सरादर्वाचीनकाले धारितेऽपि कृत्स्नं संवत्सरं भृतवान् भवति । उक्तविज्ञानप्रशंसार्थं मविज्ञातुरुक्तफलाभावं दर्शयति— "संवत्सरोपासितो हैवेति । संवत्सर मुपासित एव भवति, परं न तूक्तरूपेण धृतः । उक्तवक्ष्यमाणयोः साङ्कर्यपरिहाराय उक्तस्याधिदैवतपरतां व्यवस्थापयति— "इत्यधिदैवत मिति ॥ १९ ॥

"अध्यात्म मिति । प्रदर्श्यत इति शेषः । "आत्मैवाग्नि-रिति । आत्मात्र देहव्यतिरिक्तो मनउपाधिकः । 'प्राणाः' शीर्षण्याः 'शिक्यम्' । ननु निरवयव मात्मानं प्रति धारकत्वेन कथं प्राणानां शिक्यत्वयोग्यतेति, तत्राह— "प्राणैर्ह्यय मात्मा शक्नोति स्थातु मिति । "प्राणाधिपः सञ्चरति स्वकर्मभिः"— इत्यादिश्रुतेः * प्राणोपाधिकत्वेन देहाद्देहान्तरेऽवस्थानसम्भवात् । अतः शक्नोत्यनेन अवस्थातु मिति । वर्णव्यापत्त्या शिक्यशब्दो निष्पन्नः † । 'प्राणानां' चक्षुःश्रोत्रनासास्थविवरवर्तिनां षट्सङ्ख्यायोगात् "षड्ढि प्राणाः"— इत्युक्तम् ॥ २० ॥

शिक्यस्याधस्तादर्शितं मवयवं दर्शयति— "तस्य मन एव प्रतिष्ठेति । एतत् समर्थयते— "मनसि ह्यय मात्मा प्रतिष्ठित इति । मनसा परिच्छेद्यत्वात् मनसि प्रतिष्ठितत्वम् । शिक्यस्योपर्यवयवं दर्शयति— "अथ वासस्तत् वाससा ह्यय मात्मा प्रावृत इति । वसनाभावे सोपाधिकस्यात्मनो भोगाभावात् प्राण-

---

* श्वेता० उप० ५. ७ ।

† तदेवं शक्नोतेः शिक्य मिति रूपं निष्पद्यत इत्याशयः ।

द्वारेणात्मप्राप्तो भवति। आत्मरूपोऽग्निर्मनश्चक्षुरादिभिः प्राणाख्यैः इन्द्रियैरन्नं भुञ्जानो वर्त्तत इत्यभिप्रायः। "स यो हैतदिति। 'एतत्' अग्निशरीरात्मकं वस्तु 'एवम्' उक्तप्रकारेण अग्नेरात्मत्वम् प्राणानां शिरस्त्वाद्यात्मकतां च 'वेद', सः 'एतेनेत्यादि', व्याख्यातम् * ॥ २१ ॥

उखयैव धारणं प्रशंसति— "अथैन मुखयेति। 'एनम्' अग्निम् 'इमे लोकाः' 'अमुं' धारयितुम् 'अर्हन्ति' ॥ २२ ॥

उखायां 'ख'-शब्दप्रवृत्तिनिमित्तप्रदर्शनद्वारा प्रशंसति— "सा यदुखा नामेत्यादिना। 'सा' स्थाली 'यद्' यस्मात् उखानाम धृतवती, तदभिधीयत इति शेषः। "एतद्वै देवाः उदखनन्" -इति सम्बन्धः। तत्प्रकार मभिनीय दर्शयति— "एतेन कर्मणेति। 'एतेन' वक्ष्यमाणप्रकारेण। तद् विशिनष्टि— "एतयैवावृतेति। 'आवृत्' प्रकारविशेषः। उखिमत्या उखाया लोकत्रयात्मकत्वस्योक्तत्वात् † उखोत्खननमेव लोकत्रयोरुखननमित्यर्थः। खननं तत्र निर्माणमभिप्रेतम्। उत्खन्यमानत्वात् 'उखा'। स्पष्टमन्यत् ॥ २३ ॥

अरत्नीयां उखां तद्गताक्षरसङ्ख्यया प्रशंसति— "तद्वा उखेति द्वे अक्षरे इत्यादिना। यजमानस्य चीयमानाग्न्यात्मना संस्कर्त्तव्यत्वात् 'यजमानोऽग्निः' इत्युच्यते। "यावानग्निरिति। इयत्परिमाणवान्। 'अस्य' यजमानाभिन्नस्याग्नेः 'यावती मात्रा' अवयवः पादगतसङ्ख्या, 'तावता' कृत्स्नेनापि 'एनम्' 'एतेन'

---

* ३७५, ३८४ पृ० १६ कण्डी द्रष्टव्या।
† ३ अ० ७ ब्रा० ४, ५ क० (२६०, २६१ पृ०) द्रष्टव्यम्।

प्रकारेण 'बिभर्ति' धृतवान् भवति यजमानः। एवं मन्त्रान्तराणि यावानग्निरित्येतद् व्याख्येयम्।

पर्यायान्तरं समुच्चित्य तद्गतसङ्ख्याद्वारेणोखाभरणं स्तौति— "सो एव कुम्भी स स्थाली तत् षडित्यादिना। 'सो एव' उखा, सैव, 'उ'-शब्दोऽनर्थकः। 'कुम्भी' कुम्भीत्यपि व्यवह्रियते, 'सा' एव 'स्थाली'। अत्र 'तत्' सर्वाणि मिलित्वा 'षट्'। गतमन्यत् ॥ २४ ॥

उख्याग्नेरिण्ड्वाभ्यां परिग्रहं प्रशंसति— "यदेन मिण्ड्वाभ्या मिति *। 'इण्ड्वः' इति तयोरुखाधारणसाधनभूतौ परिमण्डलौ पदार्थविशेषौ; ताभ्याम् 'एनम्' उख्याग्निं परिगृह्णाति। एकस्यैव तेजसः त्रिधा दिव्यन्तरिक्षभूम्यवस्थानात् "त्रेधात्मानं व्यकुरुत"-इत्यादिश्रुतेः† एषोऽग्निरेव असौ आदित्यः। परिभ्रमतः आदित्यस्य पुरस्तात् पश्चाच्चावस्थिते 'अहोरात्रे' एव इण्ड्व-स्थानीये, अत इण्ड्वाभ्यां अग्निपरिग्रहेण अहोरात्राभ्याम्-अमुम् आदित्यं परिगृहीतवान् भवति। उक्तमर्थं लोकप्रसिद्ध्या द्रढयति— "तस्मादेष इति ॥ २५ ॥

इत्थ मिण्ड्वे अहोरात्रात्मना प्रशस्य द्युपृथिव्यात्मलोकद्वया-त्मनापि प्रशंसति— "यदेवैन मिति। तयोर्वर्तुलत्वं प्रशंसति— "परिमण्डले भवतः परिमण्डलौ हीमौ लोकाविति। इण्ड्व-योर्मुञ्जविकृतत्वं विधत्ते च विधाय तदर्थवाद मुक्त मतिदि-शति— "मौञ्जे विहतौ तस्योक्तो बन्धुरिति। "त्रिवृदग्निरित्या-

---

* का० श्रौ० सू० १६ ५ ३।

† अग्रेऽत्रोपरिष्टादाम्नास्यते ( १० का० ६अ० ५ब्रा० ३ क० )।

दिनेत्यर्थः *। तयोर्बहिर्दोषपरिहाराय मृद्दिग्धत्वं विधाय तद्वाक्यशेष मप्यतिदिशति— "मृदा दिग्धे भवतो एवोक्त इति †। अत्र सूत्रम्— "इण्ड्वशिक्यासन्दीषु मुञ्जरज्जवस्त्रिवृतो मृद्दिग्धाः, परिमण्डलाभ्या मिण्ड्वाभ्या मुखां परिगृह्णाति"—इति ‡ ॥ २६ ॥

अथोख्यस्याग्नेर्यावन्तः साधनपदार्थाः प्रागुक्ताः, तेषां या सङ्ख्यास्ति, तां सङ्ख्या प्रशंसति — "अथातः सम्पदेवासन्दी चोखा चेत्यादिना। इतः परं सम्पत्सम्पत्तिरेवोच्यते, न तु नूतनः कश्चित् पदार्थोऽभिधीयत इत्यर्थः। शिक्यादयः षट्, ऋतवोऽपि षट्, तदात्मकः संवत्सरोऽग्निः; 'अतः' उक्तार्थसम्पादनेनैव एषाग्निः संवत्सरसम्मितो भवतीति 'सम्पत्'। उक्तपदार्थसङ्ख्याया इण्ड्वसङ्ख्या अपि समुच्चित्य सम्पदन्तरं दर्शयति— "इण्ड्वे तदष्टाविति। अग्नेर्गायत्रत्वाय प्रजापतिमुखात् सहोत्पन्नत्वोपाधिनैकत्वम् § ॥ २७ ॥

इत्थं प्रधानपदार्थगतसङ्ख्यासम्पत्तिमुक्त्वाथ सर्वविषयां सम्पदं दर्शयति— "अथ सर्वसम्पदिति। उच्यत इति शेषः। 'चत्वारः पादाः' आसन्द्याः सन्ति, तस्याश्चतुर्दिक्ष्ववस्थितानि 'चत्वारि अनूच्यानि', तन्मिलित्वाष्टौ। शिक्यवल्कपाशौ द्वौ। ननु शिक्यावयवा बहवः सन्ति, कथं न गण्यन्त इत्याह— "यत्तु किञ्च

---

* पुरस्तात् (१३८ पृ० १४ पं०) द्रष्टव्यम्।

† पुरस्तात् (३७५ पृ० २ पं०) द्रष्टव्यम्।

‡ का० श्रौ० सू० १६ । ५ । ३ । 'उखा याभ्यां गृह्यते तौ इण्ड्वौ शिक्यं प्रसिद्धम्, आसन्दी च, अनुरक्ता रज्जवो मृद्दिग्धा भवन्ति। मृद्दिग्धाः, कर्दमलिप्ताः'—इति, [illegible]

§ तै० सं० ७ । १ । २ । ४ द्रष्टव्यम्।

रुक्माख्यं * शिक्यमिति । 'तदनु' शिक्य मनु 'उखा' भवति, सैका 'अग्निः' । रुक्माभ्यां सह 'त्रयोदश' । "त्रयोदश मासाः संवत्सर" इत्यादि, स्पष्टम् ॥ २८ ॥ १ [ ७. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे सप्तमेऽध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम् . )

तं तिष्ठन् प्रतिमुञ्चते । असौ वा ऽआदित्य एष रुक्मस्तिष्ठतीव वा ऽअसावादित्योऽथो तिष्ठन् वै व्वीर्यवत्तर उदङ् प्राङ् तिष्ठंस्तस्योक्तो बन्धुः ॥ १ ॥

दृशानो रुक्म ऽउर्व्या व्यद्यौदिति । दृश्यमानो ह्येष रुक्म उर्व्या व्विद्योतते दुर्मर्षं मायुः श्रिये रुचान इति दुर्मरं वा ऽएतस्यायुः श्रियो ऽएष रोचतेऽग्निरमृतो ऽअभवद्वयोभिरिति सर्व्वैर्व्वा ऽएष व्वयोभिरमृतो ऽभवद्यदेनं द्यौरजनयदिति द्यौर्वा ऽएत मजनयत् सुरेता इति सुरेता ह्येषा यस्यैष रेतः † ॥ २ ॥

---

* "मौञ्जं त्रिवृद् रुक्मार्थं भवति"—इति का० श्रौ० सू० १७. २. ६ ।
† 'रेतः'—इति ग, घ ।

ऽअथैन मिड्ढाभ्यां परिगृह्णाति। नक्तोषासा समनसा विरूपे इत्यहोरात्रे वै नक्तोषासा समनसा विरूपे धापयेते शिशु मेकᳬ समीची ऽइति यद्वै किञ्चाहोरात्रयोस्तेनैत मेव समीची धापयेते द्यावाक्षामा रुक्मो ऽअन्तर्विभातीति हरन्नेतद्यजुर्जपतीमे वै द्यावापृथिवी द्यावाक्षामा ते ऽएष यदन्तरा विभाति तस्मादेतद्धरन्यजुर्जपति देवा अग्निं धारयन् द्रविणोदा इति परिगृह्य निदधाति प्राणा वै देवा द्रविणोदास्त ऽएत मग्र ऽएव मधारयंस्तैरेवैन मेतद्धारयति * ॥ ३ ॥

अथ शिक्यपाशं प्रतिमुञ्चते। विश्वा रूपाणि प्रतिमुञ्चते कविरित्यसौ वा ऽआदित्यः कविर्विश्वा रूपा शिक्यं प्रासावीद्भद्रं द्विपदे चतुष्पद ऽइत्युद्यन्वा ऽएष द्विपदे च चतुष्पदे च † भद्रं प्रसौति वि नाक मख्यत् सविता वरेण्य इति स्वर्गो वै लोको नाकस्त मेष उद्यन्नेवानुविपश्यत्यनु प्रयाण

* मेतद्धारयति'—इति ख।

† ग-घ-पुस्तकयोः 'द्विपदे चतुष्पदे च'—इत्येव पाठः।

सुषसो विराजतीत्युषा वा ऽअग्रे व्युच्छति तस्या ऽएष व्युष्टिं विराजन्ननूदेति * ॥ ४ ॥

अथैनं मतो व्विकृत्या व्विकरोति । इदमेवै-तद्रेतः सिक्तं व्विकरोति तस्माद्योनौ रेतः सिक्तं व्विक्रियते ॥ ५ ॥

सुपर्णो ऽसि गरुत्मानिति । व्वीर्यं वै सुपर्णो गरुत्मान् व्वीर्यमेवैनमेतदभिसंस्करोति त्रिवृत्ते शिर इति त्रिवृतमस्य स्तोमꣳ शिरः करोति गायत्रं चक्षुरिति गायत्रं चक्षुः करोति बृहद्रथन्तरे पक्षाविति बृहद्रथन्तरे पक्षौ करोति स्तोम आत्मेति स्तोममात्मानं करोति पञ्चविꣳशं छन्दाꣳस्यङ्गानीति छन्दाꣳसि वा ऽएतस्याङ्गानि यजूꣳषि नामेति यदेनमग्निरित्याचक्षते तदस्य यजूꣳषि नाम साम ते तनूर्व्वामदेव्यमित्यात्मा वै तनूरात्मा ते तनूर्व्वामदेव्यमित्येतद्यज्ञायज्ञियं पुच्छमिति यज्ञायज्ञियं पुच्छं करोति धिष्ण्याः शफा इति धिष्ण्यैर्व्वा ऽएषो ऽस्मिंल्लोके प्रतिष्ठितः सुप-

* '०मनूदेति'—इति ख।

द्यौरसि गरुत्मान् दिवं गच्छ स्वः पतेति तदेनꣳ सुपर्णं गरुत्मन्तं कृत्वाह देवान् गच्छ स्वर्गं लोकं पतेति ॥ ६ ॥

तं वा ऽएतम् * । अत्र पक्षपुच्छवन्तं व्विकरोति यादृग् वै योनौ रेतो व्विक्रियते तादृग् जायते तद्यदेतमत्र पक्षपुच्छवन्तं व्विकरोति तस्मादेषो-ऽमुत्र पक्षपुच्छवान् जायते ॥ ७ ॥

तꣳ हैके । एतया व्विकृत्याभिमन्त्र्यान्यां चितिं चिन्वन्ति द्रोणचितं वा रथचक्रचितं वा कङ्कचितं वा प्रउगचितं वोभयतः प्रउगं † वा समुह्यपुरीषं वा न तथा कुर्याद्यथा पक्षपुच्छवन्तं गर्भं परिवृश्चेत् तादृक्तत् तस्मादेनꣳ सुपर्णचितमेव चिनुयात् ॥ ८ ॥

तमेतया व्विकृत्या । इत ऊर्ध्वं प्राञ्चं प्रवृह्णात्यसौ वा ऽआदित्य एषो ऽग्निरमुं तदादित्यमित ऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्य इत ऊर्ध्वः

* 'ऽएतम्'—इति ग, घ ।

† 'उभयतःप्रउगं'—इति च हस्त० हा०–वेबरपुस्तके

प्राङ् धीयते परोवाहु प्रगृह्णाति परोवाहु ह्येष दूरोऽथैनं सुपावहरति स सुपावहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥ ९ ॥

अथ व्विष्णुक्रमान् क्रमते। एतद्वै देवा व्विष्णुर्भूत्वेमांल्लोकानक्रमन्त यद्विष्णुर्भूत्वाक्रमन्त तस्माद् व्विष्णुक्रमास्तथैवैतद्यजमानो व्विष्णुर्भूत्वेमांल्लोकान् क्रमते ॥ १० ॥

स यः स व्विष्णुर्यज्ञः सः * । स यः स यज्ञोऽयमेव स योऽयमग्निरुखायां तमेव तद्देवा आत्मानं कृत्वेमांल्लोकानक्रमन्त तथैवैतद्यजमान एतमेवात्मानं कृत्वेमांल्लोकान् क्रमते ॥ ११ ॥

उदङ् प्राङ् तिष्ठन्। एतद्वै तत् प्रजापतिर्व्विष्णुक्रमैरुदङ् प्राङ् तिष्ठन् प्रजा असृजत तथैवैतद्यजमानो व्विष्णुक्रमैरुदङ् प्राङ् तिष्ठन् प्रजाः सृजते ॥ १२ ॥

व्विष्णोः क्रमोऽसीति। व्विष्णुर्हि भूत्वा क्रमते सपत्नहेति सपत्नान् ह्यत्र हन्ति गायत्रं छन्द

---

* 'सः'—इति ग, घ।

यस्माद् 'द्यौः' 'एनम्' अग्निम् 'अजनयत्' उदपादयत्। कीदृशी द्यौः? 'सुरेताः' शोभनाम्न्याख्यरेतोयुक्ता * ॥

प्रथमपादव्याख्यानं स्पष्टम्। दुर्मर्ष मित्येतद् व्याचष्टे— "दुर्मर मिति। वयोभिरिति बहुवचनं सार्थक मित्याह— "सर्वैर्वा एष वयोभिरमृतोऽभवदिति। अग्नेः सर्वभक्षत्वात् सर्व मप्यन्नम्। अस्य दिवः सकाशात् उत्पत्तिः प्रसिद्धेति दर्शयति— "द्यौर्वा एत मजनयदिति। 'सुरेताः'-इति द्यु-विशेषणम्। कथं तस्य तथात्व मिति, तत्राह— "सुरेता ह्येषा यस्या रेत इति ॥ २ ॥

अथाग्नेरिण्ड्वाभ्यां परिग्रहणं विधत्ते— "अथैन मिण्ड्वाभ्यां परिगृह्णाति नक्तोषासा समनसा विरूपे इति †। "अहोरात्रे वै नक्तोषासेति। अस्याया ऋचोऽय मर्थः—

'नक्तोषासा' उषःशब्देन अत्र अहर्विवक्ष्यते, रात्र्यहनी। 'समनसा' समानमनसौ, 'विरूपे' विविधरूपे, शुक्लकृष्णभेदेन द्वैविध्यम्, 'समीची' सम्यगञ्चने, यथा लोके 'वत्सं शिशुं धापयेते' पितामातरावनुगच्छतः, एव मेकं अस्यामाख्यं शिशुं धापयेते, स्वावस्थितैः प्राणिभिः अग्निहोत्रादिकर्मद्वारेणानुगतं शिशुमग्निं परिगृह्णामीति शेषः। किञ्च यौ 'द्यावाक्षामा' द्यावापृथिव्यौ 'अन्तः' तयोर्मध्ये 'रुक्मः' रोचमानः अग्निः 'विभाति' दीप्यते, त माहरामीति शेषः। यम् 'अग्निं' द्रवि-

---

* वा सं० १२ १।

† का० श्रौ० सू० १६ ५ ३। "उखां याभ्यां यच्छते तौ इण्ड्वौ"—इति तद्वृत्तौ।

पादं नेदिमांल्लोकानतिप्रणश्यानीत्यूर्ध्व मेवाग्नि मुद्गृह्णाति स उ ह्यारोहति ॥ १६ ॥ २ ॥

॥ इति पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् [ ७. २. ]॥

अथ यदुक्तं सूत्रकृता "तिष्ठन्नुदङ् प्राङ् रुक्मप्रतिमोचनविष्णुक्रमवात्सप्रेषु च"—इति *, तदिदं विधाय प्रशंसति— "तं तिष्ठन् प्रतिमुञ्चत्यसौ वा आदित्य एष रुक्म इति। रुक्मस्यादित्यत्वं रुक्मस्य सत्यत्व मभिधाय तद् यत् तत् सत्य मसौ स आदित्य इत्यादिनोक्तम्। उपर्युपर्यारोहणात् आदित्यः तिष्ठन्नेव वर्त्तते। "उदङ् प्राङ् तिष्ठन् तस्योक्तो बन्धुरिति। "एषा ह्युभयेषां देवमनुष्याणां दिक् †"—इत्यादिनेत्यर्थः ॥ १ ॥

तत्र मन्त्रं विधाय व्याचष्टे— "दृशानो रुक्म उर्व्या व्यद्यौदिति दृश्यमानो ह्येष रुक्म इत्यादिना ‡। आदित्यात्मकः 'एष रुक्मो' 'दृशानः' दृश्यमानः 'उर्व्या' महद्दीप्त्या 'व्यद्यौत्' विद्योतते। यस्य रुक्मस्य 'आयु' जीवनोपलक्षितः कालः 'दुर्मर्षम्' दुर्गरम्, अविनाश्य मित्यर्थः। यः 'श्रिये' जगतः श्रीनिमित्तं 'रुचानः' रोचमानः भवति। आदित्ये रोचमाने सति जगत् शोभते इति प्रसिद्धम्। किञ्च 'अग्निः' 'वयोभिः' अन्नैः 'सर्वैः' अपि 'अमृत' अमरणधर्मा 'अभवत्'। 'यद्'

* का० श्रौ० सू० १६ ४ ३१, ३२।
† पुरस्तात् ६ २ ३ ( ३२४ पृ० १४ पं० ) द्रष्टव्यम् ।
‡ का० श्रौ० सू० १६ ५. १ ।

मिति॥ सुपर्णात्मना भावनया तस्य वीर्यं मेवाभिसंस्कृतवान् भवति । चित्रदादय शब्दा मन्त्रव्याख्यानावसरे एव व्याख्याता । सुगम मन्यत् ॥

यजुषां कथ मग्नेर्नामधेयत्व मित्याशङ्क्य तद् व्याचष्टे— "यजूंषि नामेति । "यदेन मग्निरित्याचक्षत इति । य सर्वैरुच्यमानोऽग्निरिति शब्दोऽस्ति, तस्यापि यजुरन्त पातित्वात् यजुष्ट्वम् । 'तत्' तत एव । नाम्न एकस्यापि बहुषु प्रदेशेषु पाम्नानात् यजूंषीति बहुवचनम् । दिव मित्यनेन तत्रस्था देवा विवक्षिता इति व्याचष्टे— 'देवान् गच्छेति । "तद् एन सुपर्णं गरुत्मन्त कृत्वा पाहेति मन्त्रशेष । किं माह ? देवान् गच्छेत्यार्थं माहेति । अथवा मन्त्रोच्चारयिता सुपर्णोऽसीत्यादिना 'एनम्' अग्नि 'सुपर्णं गरुत्मन्त कृत्वा' 'पाह' ब्रूते । किं मिति ? 'देवान् गच्छ'-इति ॥ ६ ॥

उक्त विकार पञ्चपुच्छाद्यात्मकम्, भाविनोऽग्निजननस्य उपयोगितया प्रशंसितु मनुवदति— "स वा एत मिति । वक्ष्यमाणोपयोगिन लोकन्याय दर्शयति— "यादृग् वै योनाविति । यादृग्विध सिच्यते, तादृग् जायते, इति लोकमर्यादा । 'यद्' यस्मात् 'पञ्चपुच्छवन्त विकरोति' 'अत्र' उखाधारणसमये । तस्मात् 'एन' अग्नि 'अमुत्र' आहवनीयदेशे चयनानन्तर तादृगेव 'जायते', चयनेन सुपर्णाकार एव जायत इत्यर्थ । अनेनाभिमन्त्रणचयनयोर्वै सादृश्याभाव उक्त ॥ ७ ॥

प्रसङ्गात् केषाञ्चित् पक्ष मुदाहृत्य निराचष्टे— 'त हैन एकया विक्रत्याभिमन्त्रयान्त्या चिति मित्यादिना । 'एतया' सुपर्णोऽसीत्याद्युक्तरूपया । 'अन्याम्' इत्यस्य विवरणम्— "द्रोण

मिति। सुपर्णात्मना भावनया तस्य वीर्य्यमेवाभिसंस्कृतवान् भवति। त्रिवृदादयः शब्दा मन्त्रव्याख्यानावसरे एव व्याख्याताः। सुगम मन्यत् ॥

यजुषां कथ मग्नेर्नामधेयत्व मित्याशङ्क्य तद् व्याचष्टे— "यजूंषि नामेति। "यदेन मग्निरित्याचक्षत इति। यः सर्वैश्चीयमानोऽग्निरिति शब्दोऽस्ति, तस्यापि यजुरन्तःपातित्वात् यजुष्ट्वम्। 'तत्' तत एव। नाम्न एकस्यापि बहुषु प्रदेशेषु चाम्नानात् यजूंषीति बहुवचनम्। दिव मित्यनेन तत्रस्था देवा विवक्षिता इति व्याचष्टे— "देवान् गच्छेति। "तद् एनं सुपर्णं गरुत्मन्तं कृत्वा चाहेति मन्त्रशेषः। किमाह? देवान् गच्छेत्यादार्थ माहेति। अथवा मन्त्रोच्चारयिता सुपर्णोऽसीत्यादिना 'एनम्' अग्निं 'सुपर्णं गरुत्मन्तं कृत्वा' 'चाह' ब्रूते। कि मिति? 'दिवम् गच्छ'–इति ॥ ६ ॥

उक्तं विकारं पक्षपुच्छशाखात्मकम्, भाविनोऽग्निजन्मनस्य उपयोगितया प्रशंसितु मनुवदति— "तं वा एत मिति। वक्ष्यमाणोपयोगित्वं लोकन्यायं दर्शयति— "यादृग् वै योनाविति। यादृग्विधं सिच्यते, तादृग् जायते, इति लोकमर्यादा। 'यद्' यस्मात् 'पक्षपुच्छवन्तं विकरोति' 'अत्र' इष्टकाधारणसमये। तस्मात्' 'एषः' अग्निः 'अमुत्र' आहवनीयदेशे चयनानन्तरं तादृगेव 'जायते', चयनेन सुपर्णाकार एव जायत इत्यर्थः। अनेनाभिमन्त्रणचयनयोर्वै सादृश्याभाव उक्तः ॥ ७ ॥

प्रसङ्गात् केषाञ्चित् मत मुदाहृत्य निराचष्टे— "तं हैक एकया विकृत्याभिमन्त्र्यान्या चिति मित्यादिना। 'एतया' सुपर्णोऽसीत्याद्युक्तरूपया। 'अन्याम्' इत्यस्य विवरणम्— "द्रोण-

चित मित्यादिकम् *। द्रोणादयोऽग्नेरेवाकाराः। "समुह्य पुरीषं चेति। प्रतिदिशं पुरीष माहृत्याहृत्य, तेनैव चयनं 'समुह्य', पुरीषाख्या चितिः। इतराः स्पष्टाः। निषेधोपयोग-विषये निषेध्यस्य प्रतिकूलता माह— "यथा पक्षपुच्छवन्तं गर्भं परिस्रवेत्, तादृक् तदिति। स्वपक्ष मुपसंहरति— "तस्मा-देनं सुपर्णचित मेवेति ॥ ८ ॥

यदुक्तं सूत्रकृता— "सशिक्यं प्राञ्चं प्रगृह्णाति सुपर्णोऽसीति पिण्डवद् धारयञ्चेति"—इति †। च-शब्दोऽवधारण मिति पिण्ड-वदेव; उखायां मृत्पिण्डधारणं यद्वत्, तद्वदित्यर्थः। तदिदं विधत्ते— "न नैतया विह्वलयेत ऊर्ध्वं प्राञ्चं प्रगृह्णातीति। 'इतः' पश्चात् प्रदेशात् 'प्राञ्चं' प्राङ्मुखं सूर्यस्याग्नेश्च यथा मध्ये व्यवधानं न भवति, तथेत्यर्थः। एतत् प्रशंसति— "असौ वा आदित्य एषोऽग्निरिति। अग्नेरादित्यात्मकत्वं प्रागु-क्तम्। आदित्यस्य प्रागुद्गमति प्रसिद्धता उक्तार्थं मुपोद्वलयति— "तस्मादसावादित्य इति। प्रग्रहणे प्रकारविशेष माह— "परो-बाहु प्रगृह्णातीति। बाह्वोः 'परः' ऊर्ध्ववर्ती यथा भवति तथेत्यर्थः। 'एषः' आदित्यः 'इतः' 'पश्चात्' भूस्थानात् 'परो-बाहुः'; सर्वेषां बाह्वोरूर्ध्वप्रदेशवर्तित्वात् तदभिन्नस्याप्यस्य तथा प्रग्रहणं युक्त मित्यर्थः। बाह्वोरुपरिष्टतस्याग्नेः प्रत्यवरो-

* "एतया विहव्याभिमन्त्र्य केऽन्यचितिं चिन्वन्ति, द्रोणचिद्रथ-चक्रचित्प्रउगचिद्धभयतः प्रउगः समुह्य पुरीषः"—इति का० श्रौ० सू० १६. ५. ६। 'एते ह्यग्निविशेषाः, तदाकारांश्चिन्वन्त्येके, एते सुपर्णचितम्'—इत्यादि तत्र वृ०।

† का० श्रौ० सू० १६. ५. ७, ८।

ष्टणम्। तदनन्तरम् नाभेरुपरि प्रदेशे धारणं विधत्ते— "अथैन मुपावहरतीति। "तस्योक्तो बन्धुरिति। उपरिनाभिधारणार्थ-वाद उक्तो रुक्मधारणप्रस्तावे * इत्यर्थः ॥ ८ ॥

अथ विष्णुक्रमक्रमणं विधाय, तत् निर्वचनद्वारेण प्रशं-सति— "अथ विष्णुक्रमानिति †। विष्णुभूतैर्देवैः क्रान्तत्वात् विष्णुक्रम इति नाम सम्पन्नम्। यथा देवैस्तथैव 'एतत्' एतेन समन्तकपादाक्रमणेन 'इमान् लोकान्' विष्णुर्भूत्वा क्रान्तवान् भवति यजमानः ॥ १० ॥

ननु मनुष्यस्य यजमानस्य कथं विष्णुभावेन आक्रमणं सङ्गच्छत इत्याशङ्क्याह— "स य इति। 'सः' 'यः' प्रसिद्धः 'विष्णुः' अस्ति, 'सः' 'यज्ञः'। पुनश्च 'सः' 'यः' प्रसिद्धो 'यज्ञः' अस्ति, 'अयम् अग्निरेव'। अथ किमिति कः? यः 'उखायां' वर्तते, सोऽग्निरेव विष्णुरित्यर्थः। प्रतिपादितस्य विष्णोः स्वरूपप्राप्तिं देवाना दर्शयति— "एत मेव तद्देवा इति। "तथै-वैतद्यजमान मित्यादिकं स्पष्टम्। उखाग्निं धृत्वा क्रमण मेव विष्णु-क्रमण मित्युक्तम् भवति ॥ ११ ॥

क्रमणप्रकारं विधाय प्रशंसति— "उदङ् प्राङ्डित्यादिना ‡। अत्र लोकत्रयप्रतिनिधित्वेन त्रिवाराक्रमणम्, तस्य त्रयो मन्त्राः, दिशो विक्रमार्थं § पादाक्रमणाभावेऽपि एको मन्त्रः ‖ ॥ १२ ॥

---

* पुरस्तात् ( ७ १ ८—११ ) ३७३ पृ० द्रष्टव्यम्।
† का० श्रौ० सू० १६ ५. ११।
‡ का० श्रौ० सू० १६ ५ १४।
§ का० श्रौ० सू० १६ ५ १३।
‖ का० श्रौ० सू० १६ ५. १२।

तदेवं मन्त्रचतुष्टयं विक्रमणेन विधाय व्याचष्टे— "विष्णोः क्रमोऽसीति *। "विष्णुर्हि भूत्वा क्रमत इत्यादिना। प्रथममन्त्रस्याय मर्थः— हे पादक्रमणसाधन ! पादनिधानस्थान ! त्वं 'विष्णोः क्रमोऽसि' 'इति' एतत् प्रसिद्ध मेव, तद् दर्शयति— "विष्णुर्हि भूत्वेति। 'यत्र' पादक्रमणकाले 'सपत्नान्' शत्रून् 'हन्ति' हिनस्ति खलु ; अतः 'सपत्नहा' इति विशेषणं युक्तम्। 'गायत्रं छन्दः'-'पृथिवी मनु'-इत्येतयोरर्थः स्पष्टम्। क्रमणप्रकार माह— "प्रहरति पाद मिति। पादं पुरोदेशं प्रति नयेत्, नीत्वा च 'क्रमते' पादं प्रक्षिपेत्। तदनन्तरम् 'अग्निम्' 'ऊर्ध्वं' नाभेरुपरिदेशं प्रति 'उद्गृह्णीयात्', ऊर्ध्वमुखं गृह्णीयात्। 'हि' यस्मात् 'ऊर्ध्वः' भूलोकादुपरिदेशं प्रति 'रोहति' विष्णुक्रमणेन, अतोऽग्नेरप्यूर्ध्वदेशप्रापणं युक्त मित्यर्थः ॥ १३ ॥

एव मुत्तरत्रयं मन्त्रब्राह्मण मपि व्याख्येयम्। 'सपत्नहा'-इत्यस्य स्थाने क्रमेण 'अभिमातिहा'-'अरातीयतो हन्ता'-इति विशेषः †। तथा गायत्र मित्यस्य स्थाने क्रमेण 'त्रैष्टुभम्', 'जागतम्', 'आनुष्टुभम्' इति विशेषः। एवम् 'अन्तरिक्षं', 'दिवं', 'दिशम्'-इति च। इतरत् समानम् ॥ १४, १५ ॥

दिग्विक्रमणे विशेष माह— "दिशोऽनुविक्रमस्वेति ‡। सर्वा दिशोऽनुवीक्ष्य पादं न प्रहरेत्। पादप्रक्षेपाकरणस्य प्रयोजन माह— "नेदिमानिति। 'नेत्'-इति परिभये ; एतेषां त्रयाणां

---

* वा० सं० १२. ५. १।

† चतुर्दशकण्डिकायाम् अभिमातिहा'-इति, तत उत्तरत्र 'अरातीयतो हन्ता'-इत्येवमादि बोद्धव्यम्।

‡ वा० सं० १२. ५. २।

लोकाना मतिक्रमः परिभयम्; अतस्तत्कर्त्तव्य मिति तस्याभिप्रायः। पादग्रहणवत् अन्येषामुद्ग्रहणस्यापि निवृत्तिप्रसक्तावाह— "ऊर्द्ध्व मेवाग्नि मिति। 'एव'-शब्दो भिन्नक्रमः; उद्ग्रहणात्येव। तत्र प्रयोजनं दर्शयति— "स एष्वारोहतीति। समारोहणसम्भवात् तत्प्रयोज्य मप्युद्ग्रहणं कर्त्तव्य मेवेत्यर्थः ॥ ११ ॥ २ [ ७. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे सप्तमेऽध्याये द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् . )

अथैन मिति प्रगृह्णाति। एतद्वै देवा अकामयन्त पर्जन्यो रूपᳪ स्यामेति त एतेनात्मना पर्जन्यो रूप मभवंस्तथैवैतद्यजमान एतेनात्मना पर्जन्यो रूपं भवति * ॥ १ ॥

अक्रन्ददग्नि स्तनयन्निव द्यौरिति। क्रन्दतीव हि पर्जन्य स्तनयन् क्षामा रेरिहद्वीरुधः समञ्जन्निति क्षामा वै पर्जन्यो रेरिह्यमाणो वीरुधः समनक्ति

---

* 'भवति'—इति ग, घ च ।

सद्यो जज्ञानो वि ही मिद्धो ऽअख्यदिति सद्यो वा ऽएष जज्ञान इदꣳ सर्व्वं विख्यापयत्या रो- दसी भानुना ऽऽभात्यन्तरितीमे वै द्यावापृथिवी रोदसी ते ऽएष भानुनाभाति परोवाहु प्रगृह्णाति परोवाहु हि पर्जन्यः * ॥ २ ॥

अथैन मुपावहरति। एतद्वै यो ऽस्मिंल्लोके रसो यदुपजीवनं तेनैतत् सहोर्द्ध इमांल्लोकान् रो- हत्यविर्वा ऽअस्मिंल्लोके रसोऽस्मिन्नुपजीवनं तद्यत् तावदेव स्यान्न हास्मिंल्लोके रसो नोपजीवनꣳ स्यादथ यत् प्रत्यवरोहत्यस्मिन्नेवैतल्लोके रस मुपजी- वनं दधाति ॥ ३ ॥

यद्वेव प्रत्यवरोहति। एतद्वा ऽएतदिमांल्लो- कानित ऊर्द्ध्वो रोहति स स पराङिव रोह इय मु वै प्रतिष्ठा तद्यत्तावदेव स्यात् प्र हास्माल्लोका- द्यजमानश्च्यवेताथ यत् प्रत्यवरोहतीमा मेवैतत् प्रतिष्ठा मभिप्रत्येतस्या मेवैतत् प्रतिष्ठायां प्रति- तिष्ठति ॥ ४ ॥

---

* 'पर्ज्जन्यः'—इति क, ग, 'पर्ज्जन्यः'—इति ख, च।

यदेव प्रत्यवरोहति । एतद्वा ऽएतदिमांल्लोकानित ऊर्ध्वो जयति स स पराङिव जयो यो वै पराङेव जयत्यन्ये वै तस्य जित मन्ववस्यन्त्यथ य उभयथा जयति तस्य तत्र कामचरणं भवति तद्यत् प्रत्यवरोहतीमानेवैतल्लोकानितश्चोर्ध्वानमुतश्चार्वाचो जयति * ॥ ५ ॥

अग्नेऽभ्यावर्त्तिन् । अभि मा निवर्त्तस्वाग्ने ऽङ्गिरः पुनरूर्जा सह रय्येत्येतेन मा सर्व्वेणाभिनिवर्त्तस्वेत्येतच्चतुष्कृत्वः प्रत्यवरोहति चतुर्हि कृत्व ऊर्ध्वो रोहति तद्यावत्कृत्व ऊर्ध्वो रोहति तावत्कृत्वः प्रत्यवरोहति त मुपावहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥ ६ ॥

अथैन मभिमन्त्रयते । आयुर्वा ऽअग्निरायुरेवैतदात्मन् धत्त ऽआ त्वाहार्ष मित्या ह्येनं हरत्यन्तरभूरित्यायुरेवैतदात्मन् धत्ते ध्रुवस्तिष्ठाविचाचलिरित्यायुरेवैतद् ध्रुव मन्तरात्मन् धत्ते विशस्त्वा सर्वा वाञ्छन्त्वित्यन्नं वै विशोऽन्नं त्वा सर्व्वं वाञ्छ-

* 'जयन्ति'—इति ख ।

त्वैषैतन्मा त्वद्राष्ट्रमभिभ्रशदिति श्रीर्वै राष्ट्रं मा त्वच्छ्रीरभिभ्रशदित्येतत् * ॥ ७ ॥

अथ शिक्यपाशं च रुक्मपाशं चोन्मुञ्चते । वारुणो वै पाशो वरुणपाशादेव तत् प्र मुच्यते वारुण्यऽर्चा स्वेनैव तदात्मना स्वया देवतया वरुणपाशात् प्रमुच्यत ऽउदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथायेति यथैव यजुस्तथा बन्धुरथा वयमादित्य व्रते तवानागसो ऽदितये स्यामेतीयं वा ऽअदितिरनागसस्तुभ्यं चास्यै च स्यामेत्येतत् † ॥ ८ ॥

अथैनमिति प्रगृह्णाति । एतद्वा ऽएनमदो विक्रमयत ऊर्ध्वं प्राञ्चं प्रगृह्णाति तं तत इति प्रगृह्णाति तद्यावदेवाभविष्यदेव हैवैष व्यरए-ख्याताय यदेनमिति प्रगृह्णाति तस्मादेष दूरीत्वा-थेति पुनरैति ‡ ॥ ९ ॥

अग्रे बृहन्नुषसा मूर्द्धो ऽस्थादिति । अग्रे ह्येष

* '०दित्येतत्'—इति ग, घ ।

† 'स्यामेत्येतत्'—इति ग घ ।

‡ 'पुनरैति'—इति ग, घ ।

बृहन्नुषसा मूर्द्धस्तिष्ठति निर्ज्जगन्वान्तमसो * ज्योतिषागादिति निर्ज्जगन्वान् वा ऽएष रात्रै तमसोऽह्ना ज्योतिषैत्यग्निर्भानुना रुशता स्वङ्ग इत्यग्निर्व्वा ऽएष भानुना रुशता स्वङ्ग आ जातो व्विश्वा सद्मान्यप्रा इतीमे वै लोका व्विश्वा सद्मानि तानेष जात आपूरयति परोबाहु प्रयच्छति परोबाहु ह्येष इतो ऽग्नेन मुपावहरतीमा मेवैतत् प्रतिष्ठा मभिप्रत्येत्यस्या मेवैतत् प्रतिष्ठायां प्रतितिष्ठति जगत्या जगती हेमांल्लोकानमुतोऽर्व्वाचो व्यश्नुते † ॥ १० ॥

हंसः शुचिषदिति। असौ वा ऽआदित्यो हंसः शुचिषद् वसुरन्तरिक्षसदिति व्वायुर्वै व्वसुरन्तरिक्षसद्धोता वेदिषदित्यग्निर्वै होता वेदिषदतिथिरिति सर्व्वेषां वा ऽएष भूताना मतिथिर्दुरोणसदिति व्विषमसदित्येतन्नृषदिति प्राणो वै नृषन् मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणो ऽग्नि-

* 'निर्ज्जगन्वां तमसो'—इति च पाठो दृष्ट, डा॰-वेवरमहोदयेन।

† 'अश्नुते'— इति क।

स मेतदाह व्वरसदिति सर्व्वेषु ह्येष व्वरेषु सन्न ऋतसदिति सत्यसदित्येतद् व्योमसदिति सर्व्वेषु ह्येष व्योमसु सन्नोऽब्जा गोजा इत्यब्जाश्च ह्येष गोजाश्चाऽश्वजा इति सत्यजा इत्येतदद्रिजा इत्यद्रिजा ह्येष ऋत मिति सत्य मित्येतद् बृहदिति निदधाति बृहद्ध्येष तद्यदेष तदेन मेतत् कृत्वा निदधाति ॥ ११ ॥

द्वाभ्या मक्षराभ्याम्। द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतन्निदधाति * ॥ १२ ॥

अथैन मुपतिष्ठते। एतद्वा ऽएन मेतन्नघूयतीव यदेनेन सहेति चेति चेमांल्लोकान् क्रमते तस्मा ऽएवैतन्निह्नुतेऽहिंसायै ॥ १३ ॥

यद्वेवोपतिष्ठते। एतद्वै देवा अबिभयुर्यद्वै नोऽय मिमांल्लोकानन्तिकान्न हिंस्यादिति तदेभ्य एवैन मेतल्लोकेभ्योऽशमयंस्तथैवैन मय मेतदेभ्यो लोकेभ्यः शमयति ॥ १४ ॥

---

* 'मेतन्निदधाति'—इति ख ।

सीद त्वं मातुः । अस्या उपस्थेऽन्तरग्ने रुचा त्वꣳ शिवो भूत्वा मह्यमग्नेऽअथो सीद शिवस्त्वमिति शिवः शिव इति शमयत्येवैनमेतदहिꣳसायै तथो हैष इमांल्लोकाञ्छान्तो न हिनस्ति ॥ १५ ॥

त्रिभिरुपतिष्ठते । त्रय इमे लोका अथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्माऽपनिह्नुतेऽथो तावतैवैनमेतदेभ्यो लोकेभ्यः शमयति ॥ १६ ॥ ३ ॥

॥ इति पञ्चमप्रपाठके तृतीयं ब्राह्मणम् [ ७. ३. ] ॥

अथ यदुक्तं विष्णुक्रमैरग्नेरुद्धरणं युक्तम्, तस्य तथैवोर्ध्वबाहुना धारणप्रकारं हस्तेनाभिनीय विधत्ते— "अथैनमिति प्रच्छायतीति । 'इति'-शब्दविवक्षितोऽर्थः सूत्रे व्याख्याय दर्शितः— "धारणञ्च पिण्डवत्"-इति * । उखाया उपादानभूतस्य मृत्पिण्डस्य धारणं यथा प्रागुक्तम् †, ऊर्ध्वबाहुत्वविशिष्टम्, एतादृगत्रापीत्यर्थः । एतत् प्रशंसति— "एतद्वै देवा इति । एतदिति कामनाविषयस्य सङ्कल्पस्य प्रदर्शनम् । तत्

* का० श्रौ० सू० १६ ५. ८ ।
† पुरस्तात् ( ६ ७ १–११ ) ३११ पृ० द्र०

स्पष्टार्थमाह— "पर्जन्यो रूपं स्यामेतीति। यः 'पर्जन्यः' मेघो-ऽस्ति, तद्रूपं 'स्याम इति', मेघरूपो भवेनेत्यर्थः ॥ १ ॥

"अक्रन्ददग्नि स्तनयन्निवेति *। उपमानोपमेयभाव औप-चारिकः। 'क्षामा' क्षयकर्षेण सर्वक्षयकारी पर्जन्यात्मा अग्निः 'रेरिहत्' भृशं लिहन् 'वीरुधः' लतागुल्मादीन् 'समञ्जन्' सम्य-गार्द्रीकुर्वन् 'अक्रन्दत्' इति पूर्वेणान्वयः। अथवा ब्राह्मणानुसारेण 'वीरुधः समनक्ति' इति व्याख्येयम्। पर्जन्यात्मा अग्निः 'सद्यः' तदानीमेव 'जज्ञानः' जायमानः 'इद्धः' समिद्धः सन् 'इदं सर्वं' विख्यापयति' 'रोदसी' द्यावापृथिव्यौ 'अन्तः' तयोर्मध्ये 'भानुना' प्रकाशेन 'आभाति' सर्वतः प्रकाशते †।

प्रथमपादं व्याचष्टे— 'पर्जन्यः' पर्जन्याख्यः स्तनयन्, वृष्टि-लिङ्गशब्दं कुर्वन् 'क्रन्दतीव' आक्रोशतीव वर्तते। स्तनयच्छब्दे-नात्र पर्जन्यो विवक्षित इति व्याचष्टे— "जज्ञान इदꣳ सर्वं विख्यापयतीति। "इमे वै द्यावापृथिवी इत्यादि चतुर्थपाद-ब्राह्मणं स्पष्टम्। "परोबाहु प्रगृह्णातीति। एष सार्थवादः उख्याग्निधारणप्रस्तावे व्याख्यातः ‡ ॥ २ ॥

अथ हृतस्याग्नेरवरोहणं सार्थवादं दर्शयति— "अथैन-मुपावहरत्येतद्वा इति §। 'यः अस्मिन् लोके' 'रसः' सार-भूतोऽस्ति, 'यत्' यच्च सर्वप्राणिनामुपजीवनम्, 'तत्' सर्वम् 'एतद् वै' अग्निः। यद्वा, 'एतत्' इति वक्ष्यमाणार्थस्य सामा-

---

* का० श्रौ० सू० १६ ५ १४।

† वा० सं० १२ ६।

‡ पुरस्तात् ७ २ ६ कण्डी द्रष्टव्या।

§ का० श्रौ० सू० १६ ५ १५।

न्यत: सङ्ख्याभिधानम् । 'तेन' सम्भूतेनोपजीवनेन 'सह' यजमान: 'एतत्' एतेन अग्नेरूर्ध्वप्रापणप्रकारेण 'ऊर्ध्वम्' 'इमान् लोकान्' 'आरोहति'। यो रसो यदुपजीवनञ्चोक्तम्, तद्व विशिनष्टि— "अग्निर्वा इति। अग्ने: रसत्व मुपजीवनत्वञ्च दाहपाकाद्युपकारितया सर्वप्रसिद्धम् । 'तत्' पूर्वोक्तं 'यद्' यदि 'तावदेव' ऊर्ध्वं छत मेव 'स्यात्', तर्हि 'अस्मिन् लोके' रसोपजीवने न स्त: । 'अथ' आरोपणानन्तरं 'यद्' यदि 'प्रत्यवरोहति' अग्निं पृथिव्याम्, तदुभयं भूलोके पुन: स्थापयति ॥ ३ ॥

प्रकारान्तरेण प्रत्यवरोहणं प्रशंसति— "यद्देव प्रत्यवरोहत्येतद्वा इति । पूर्ववत् । "इमांल्लोकानिति । 'अर्ह्वो रोहति' विप्लुतमध्याजेन 'स:' 'पराङ्' प्रतिनिवृत्त: 'रोह:' आरोहणम् । लोकानां बहुत्व मपेक्ष्य 'स: स:' इति वीप्सा प्रतिरूपे । भूलोकं प्रति प्रत्यारोहणाभावे न प्रत्युति' स्यात् । 'ह' प्रसिद्धौ । "अथ यत् प्रत्यवरोहतीत्यादि गतम् * ॥ ४ ॥

पुनस्तदेव प्रकारान्तरेण प्रशंसति— "यद्देव प्रत्यवरोहतीत्यादिना । 'रोहति' इत्यस्य स्थाने 'जयति' इत्येतद् विशेष' । शिष्ट' पूर्ववत् । अस्तु पराजय: तस्य को बाध इत्यत आह— "अन्ये वै तस्य जित मध्यवस्यन्तीति । 'अन्ये' शत्रव: 'तस्य' 'जितं' स्थानम् 'अध्यवस्यन्ति' अनुक्रमेण आक्रमन्ते । यथोक्तवैपरीत्येन यदि 'उभयथा जयति', पराजितं पुन: प्रत्यङ् गमयतीत्यर्थ:, 'तस्य' उभयथा जयत:' 'तत्र' जितप्रदेशे 'कामचरणं भवति', अन्यैरप्रतिबद्धत्वात् । उभयथा जयप्रकार माह—

---

* पुरस्तात् तृतीयकण्डिकायां ( ४०६पृ० ) द्रष्टव्यम् ।

"तद्यत्प्रत्यवरोहतीति । 'इमांश्च लोकान्' अस्माद् भूलोकादुपर्यवस्थितान् पराङ् प्राप्तेन जयति , 'अमुतश्च अर्वाचः' अमुष्मात् द्युलोकात् अधोवर्त्तिनो लोकान् प्रत्यग्घरणेन 'जयति' ॥ ५ ॥

आरोहणस्य यथा आरोहस्थानभेदेन मन्त्रचतुष्टयं "विष्णोः क्रमोसि"–इत्यादिकं सूक्तम् , एवमवरोहणीयानामपि दिक्-सहितानां लोकानां चतुष्टादेवावरोहणस्यापि मन्त्रचतुष्टयस्य प्रतीकमुपादाय सङ्गृह्य तात्पर्यमाह— "अग्नेऽभ्यावर्त्तिन्नित्यादिना * । "अग्ने अङ्गिरः शतं ते सन्त्वावृतः"–इति † द्वितीयः, "पुनरूर्जा निवर्त्तस्व"–इति ‡ तृतीयः , "सहरय्या निवर्त्तस्व" –इति § चतुर्थः । 'एतेन' सर्वेण मन्त्रेण यावन्तः आयुर्वर्चः-प्रभृतय उक्ताः , तेन 'सर्वेण' अपि सहितो 'निवर्त्तस्व' 'इति' 'एतत्' सर्वमन्त्रेषु प्रतिपादितम् ; न ततोऽधिकमित्यर्थः ।

स्थानभेदेनैव यत् सिद्धं चतुष्कृत्वः प्रत्यवरोहणम् , तदनूद्य प्रशंसति— "चतुष्कृत्वः प्रत्यवरोहतीति । तत्रोपपत्तिमाह— "चतुर्ष्विं कत्व इति । फलितमर्थं दर्शयति— "तद् यावत्कृत्व ऊर्ध्व इति । 'स मुपावहृत्य' पूर्वं यस्मिन् नाभिप्रदेशे धृतम् , तत्रैव धारयेत् । उक्तमुपरिनाभिधारणार्थवादमतिदिशति— "तस्योक्तो बन्धुरिति । रुक्मधारणप्रस्तावे उक्त इत्यर्थः ‖ ॥ ६ ॥

---

* वा० सं० १२. ७ ।
† वा० सं० १२. ८ ।
‡ वा० सं० १२. ९ ।
§ वा० सं० १२. १० ।
‖ पुरस्तादस्पद मेव सूचितम् ( ४०६ पृ० ) ।

यदुक्तं सूत्रकृता— "उपरिनाभि धारयन्ना त्वाहार्षमित्य-भिमन्त्रयते"—इति *, तदेतद् विधत्ते— "अथैन मभिमन्त्रयते इति। 'अथ' नाभ्युपरिधारणानन्तरम्। "वायुर्वा अग्निरिति। यावन्तं कालं जठराग्निर्जठरेऽस्ति, तावत्पर्यन्तं वायुमोऽव-स्थानात् वायुयोऽग्निनिमित्तत्वात् "वायुर्वा अग्निः"—इत्युच्यते।

तत्र मन्त्रं विधाय व्याचष्टे— "अन्वाहार्षमिति †। अय मर्थः,— हे अग्ने ! 'त्वा' त्वाम् 'आहार्षम्' आहृतवानस्मि मध्यदेशं प्रति, त्वं च देहस्य 'अन्तः' मध्ये नाभिदेशे 'अभूः' स्थाः। तदनन्तरम् अग्नेरचालितः 'अविचाचलिः' 'ध्रुवः तिष्ठ'। त्वां 'सर्वा विशः' प्रजाः 'वाञ्छन्तु' इच्छन्तु, अन्न-कारणत्वात्; अयं सर्वदा अस्माकं तिष्ठतु इति हि वाञ्छन्ति। 'त्वत्' त्वत्तः सकाशात् 'राष्ट्रं' राज्यम् 'मा अधिभ्रशत्' अधिकं भ्रंशम् मा प्राप्नुयात्। "वा ह्येनं हरन्तीति आहार्ष मित्यस्य मन्त्रभागस्याभिप्रायः। "अन्तरभूः"—इत्येतस्य तात्पर्य-कथनम्— "वायुरेवैतदन्तराभवत् अन्त इति। द्वितीयपादेन तस्यायुषो ध्रुवत्वप्रार्थनम्। अन्नदातृत्वात् अन्नोपजीवित्वाद्वा विशः अन्न मिति "अन्नं वै विशः"—इत्युक्तम्। अतो विशां मन्नरूपत्वात् 'सर्वा विशः' 'त्वा' त्वाम् अन्नं 'सर्वं वाञ्छन्तु' —इत्येतदेव। राष्ट्रस्थिभावाभावस्य श्रियोऽन्वयव्यतिरेकायत्तत्वात् 'श्रीर्वै राष्ट्रम्'—इत्युपचारेणाह ॥ ७ ॥

"अथ शिक्यपाश मित्यादि ‡। 'अथ' उपस्थानानन्तरम्,

---

* का० श्रौ० सू० १६. ५. १६।

† वा० सं० १२. ११।

‡ का० श्रौ० सू० १६. ५. १७का।

शिक्यरुक्मयोः सम्बद्धं पाशम् 'उन्मुञ्चते' ऊर्ध्वं विस्रंसयेत्। तस्यैव सम्बन्धसाधनस्य पाशस्य वरुणदेवताफलप्रसिद्धिः "वारुणो वै पाशः"-इत्यत्र 'वै'-शब्देन द्योत्यते। पाशमोचके वरुणदेवताका मन्त्रं विधाय प्रशंसति— "वारुण्यर्चेति। 'तत्' तेन वारुण्यर्चा पाशविमोकेन 'स्वेनैव आत्मना' पाशस्य वास्तवेन रूपेण 'स्वया' स्वकीयया पाशाभिमानिन्या 'देवतया' 'वरुणपाशात् प्रमुच्यते' यजमानः।

तामृचं दर्शयति— "उदुत्तम मिति *। पूर्वार्द्धस्य स्पष्टार्थता माह— "यथैव यजुस्तथा बन्धु रिति। यजुःशब्देन मन्त्रो विवक्षितः। मन्त्रो यादृश मर्थं प्रकाशयति, 'बन्धुः' तद्ब्राह्मण मपि तादृगर्थप्रकाशक एव; नात्र व्याख्यातव्यो गूढोऽर्थोऽस्तीत्यर्थः। मन्त्रभागे उत्तमादिभेदभिन्नस्य त्रिविधस्य पाशविश्रयणस्य स्पष्टं प्रतिपादनादित्यभिप्रायः।

उत्तरार्द्धस्य तात्पर्य माह— "अथा वय मादित्य व्रत इत्यादिना। ख्यातायाः पृथिव्याः अचिरादेव पूर्तिदर्शनात् अखण्डनरूपस्य स्वार्थस्य पृथिव्यां विद्यमानत्वात् "इयं वा अदितिः"-इत्याह। "अनागसः तुभ्यञ्च अस्यै च स्याम इत्येतदिति। 'तुभ्यम्' आदित्याय, 'अस्यै च' अदितये 'अनागसः' अपापाः 'स्याम' 'इत्येतत्', मन्त्रेणोक्त मिति शेषः। मन्त्रार्थः स्पष्ट एव ॥ ८ ॥

यदुक्तं सूत्रकृता— "पिण्डवत् प्राग्दक्षिणा प्रगृह्णात्यग्ने बृह-स्विति"-इति †, तदेतद् विधाय प्रशंसति— "अथैन मिति

* वा० सं० १२. १२।
† का० श्रौ० सू० १६. ५. १०ख।

प्रगृह्णात्येतद्वा एन मित्यादिना। "इतीति। अग्नेरवरूढस्य ग्रहणप्रकारं हस्तेनाभिनीय दर्शयति; स च प्रकारः सूत्रे दर्शितः— "पिण्डवत् प्रागित्यादिना *। 'इतः' अस्मात् स्थानात् 'अदः' अग्निरूपेण 'विकृत्य' पूर्वम् 'ऊर्ध्वम्' प्रगृहीतवान्। अतः कारणात् 'तं' तथाप्रगृहीतम् अग्निम् 'ततः' देशात् अवतार्य 'इति' उक्तप्रकारेण प्रगृह्णीयात्। कोऽयं नियम इत्यताह— "तद् यत् तावदेवाभविष्यदिति। 'तावदेव' ऊर्ध्वप्रग्रहणमेव स्यात्, 'अत्र ह एव' ऊर्ध्वलोके एव 'एषः' 'व्यरंस्यत' विरमेत्। 'अथ' उक्तविलक्षणेन 'यत्' यस्मात् 'एतम् इति' प्रगृह्णीयात्, 'तस्मात्' 'एषः' अग्निः 'इति' 'इत्वा' ऊर्ध्वं गत्वा, 'अथ इति', एवम् अवरोहणेन 'पुनः' 'एति' स्वस्थानम् ॥ ८ ॥

तत्र मन्त्रं विधाय व्याचष्टे— "अग्ने बृहन्नित्यादिना †। अयम् अग्निः 'उषसाम्' 'अग्रे' 'बृहन्' भूत्वा 'ऊर्ध्वः' सन् निर्गतः सन् 'अस्थात्' तिष्ठति। 'तमसः' नैशात् सकाशात् 'निर्जगन्वान्' निर्गतः सन् 'ज्योतिषा सह' 'आगात्' आगच्छति। अग्न्यादित्ययोरूर्ध्वगमनप्रत्यागमनसाम्यात् आदित्यरूपत्वाय इद मभिधानम्। किञ्च 'अग्निः' 'रुशता' प्रकाश्यमानेन 'भानुना' दीप्तिविशेषेण 'स्वङ्गः' शोभनाङ्गो भवति। हे अग्ने! 'जातः' जातमात्रः सन् 'विश्वा सद्मानि' सर्वान् लोकान् आहवनीयादिस्थानानि वा 'आप्राः' सर्वतः पूरितवानसि।

---

* ४१६ पृ० २१ पं० द्रष्टव्यम्।

† वा० सं० १२ १३।

पूर्वार्द्धस्य ब्राह्मणं मन्त्रव्याख्यानेनैव व्याख्यातम्। क्षित्यादिषु स्थानेष्वग्नेरवस्थितिसम्भवात् त्रयो लोका अग्नेः स्थानानीत्यभिप्रेत्योक्तम्— "इमे वै लोका विष्णोः स्थानानीति। अवशीर्षस्य अग्रहस्य सुक्रम्। तस्य प्रकार माह— "परोक्षाद्ध प्रत्यक्षातीति। बाह्वोः परस्तादित्यर्थः। व्याख्यात मिदम् प्रत्यवरोहार्थवादे *। "जगत्येति। उपावहरतीति शेषः। सर्वत्रपीतरेषु जगत्येति कोऽयं नियम इत्यत आह— "जगती हीति। "इमान् लोकान् प्रभुतः सर्वोषः व्याप्नुते"—इति। गायत्रीत्रिष्टुब्जगतीनां क्षित्यादिलोकत्रयाक्रमणस्य विष्णुक्रममन्त्रेषु उक्तत्वात् जगती द्युलोकव्यापिनी ; अधिकाक्षरायां तस्यां न्यूनाक्षरयोश्छन्दसोरप्यन्तर्भावात् ॥ १० ॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ † ॥ २ [ ७. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे सप्तमेऽध्याये तृतीयं ब्राह्मणम् ॥

---

* तृतीयकण्डिकातो ( ४१२ पृ० १५ पङ्क्तितः ) द्रष्टव्यम्।

† एकादशादिकाण्डिकाषट्कस्य सायणीयं भाष्य मस्माभिर्नोपलब्धमपि ; चिह्नितानि तु तत्र "हंसः शुचिषत ( वा० सं० १२. १४ क० )"—इतिमन्त्रेण उख्याग्नेरवतारणम्, "शृषद् ( वा० सं० ११. १३ ख )"—इति तस्यैवासन्द्यां स्थापनम्, "सीद त्वम् ( वा० सं० १२. १५ )"—इति तस्यैवोपस्थानञ्चेति। का० श्रौ० सू० १६. ५. १८, १९, २० सूत्राणि द्रष्टव्यानि।

( अथ चतुर्थं ब्राह्मणम् . )

अथ वात्सप्रेणोपतिष्ठते । एतद्वै प्रजापति-र्व्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो वात्सप्रेणायुष्य मकरोत्तथैवैतद्यजमानो व्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो वात्सप्रेणायुष्यं करोति ॥ १ ॥

स हैष दाक्षायणहस्तः * । यद्वात्सप्रं तस्माद्यं जातं कामयेत सर्व्व मायुरियादिति वात्सप्रेणैन मभिमृशेत्तदस्मै जातायायुष्यं करोति तथो ह स सर्व्व मायुरेत्यथ यं कामयेत व्वीर्यवान्त्स्यादिति व्विक्रान्त्यैनं पुरस्तादभिमन्त्रयेत तथो ह स व्वीर्य-वान् भवति ॥ २ ॥

दिवस्परि प्रथमं जज्ञे ऽअग्निरिति । प्राणो वै दिवः प्राणाद्‌ वा ऽएष प्रथम मजायतास्माद् द्वितीयं परि जातव्वेदा इति यदेन मदो द्वितीयं पुरुषविधोऽजनयत्तृतीय मप्स्विति यदेन मदस्तृतीय मद्भ्यो ऽजनयन्नृमणा ऽअजस्र मिति प्रजापतिर्व्वै

* 'दाक्षायणहस्तः'—इति ग ।

